# GAEKWAD'S ORIENTAL SERIES

Published under the Authority of
the Government of His Highness
the Maharaja Gaekwad of Baroda

General Editor :

B. BHATTACHARYYA, M. A., Ph. D.

NO. XXIII

उमानन्दनाथरचितः

# नित्योत्सवः



# NITYOTSAVA

BY

UMĀNANDANĀTHA

[SUPPLEMENT TO PARAŚURĀMA-KALPA-SŪTRA]

EDITED BY

A. MAHADEVA SASTRI, B.A.

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS

---

RE-EDITED, REVISED AND ENLARGED BY

SWAMI TRIVIKRAMA TIRTHA

BARODA

ORIENTAL INSTITUTE

1930

## PREFACE TO THE FIRST EDITION

In the preface to the *Paraśurāma-Kalpa-Sūtra*, Part I, all that needs be said with reference to *Nityotsava* has been said. It only remains to mention the MSS. on which this edition of *Nityotsava* is based.

They are as follows :—

1. A grantha manuscript copy of the Adyar Library, No. XXXV B 103 ; cited as अ

2. Another grantha manuscript copy of the Adyar Library, No. VIII F 18 ; cited as अ १.

3. A grantha manuscript copy kindly lent by Mr. M. V. Srinivasa Iyer of Triplicane, Madras ; cited as श्री.

4—6. Devanagari MS. copies of Central Library, Baroda, Acc. Nos. 183, 4637, 5572 ; cited as ब १, ब २, ब ३ respectively.

7. A Telugu MS. copy borrowed by Pandit R. Anantakrishna Sastri from the owner in the Nizam's Dominions, cited as भ.

Of these No. 3 is the most carefully prepared copy. The others are all tolerably correct, except for some clerical errors. Two or three of these MSS. contain each here and there passages not found in the other MSS. Of these the important and useful ones have been embodied in this edition, the source being noted in each case.

A. MAHADEVA SASTRI

# विषयसूचिका

विषयः | पृष्टसङ्ख्या

## आरोम्भोल्लासः प्रथमः—दीक्षाक्रमः

**विषयः** **पृष्ठसङ्ख्या**

## तरुणोल्लासो द्वितीयः—गणपतिक्रमः

## यौवनोल्लासस्तृतीयः—श्रीक्रमः

**विषयः** **पृष्ठसङ्ख्या**

| विषयः | पुटसङ्ख्या |
| --- | --- |

**विषयः** **पृष्ठसङ्ख्या**

विषयः पृष्ठसङ्ख्या

**विषयः** **पृष्ठसङ्ख्या**



## प्रौढोल्लासश्चतुर्थः—श्यामाक्रमः

## तदन्तोल्लासः पञ्चमः—दण्डिनीक्रमः

## उन्मनोल्लासः षष्ठः—परापद्धतिः

## अनवस्थोल्लासः सप्तमः—साधारणक्रमः

| विषयः | पृष्टसङ्ख्या |
|---|---|

## PREFACE TO THE SECOND EDITION

Nityotsava, the present work, was first edited by Pt. A. Mahādeva Sastri, the Curator of the Adyar and the Mysore Government Libraries and was published in the *Gaekwad's Oriental Series*, as No. XXIII in 1923. It then appeared as the second part or supplement to the Paraśurāmakalpasūtra, which too was published in the same year under the same editorship as No. XXII in the Series. The ever-growing interest of Sanskrit scholars and lay public in mystic sciences of the Hindus is responsible for the rapid sale of the first edition, and this has been a matter of gratification for both the present editor and the authorities of the Oriental Institute. The first edition of the Paraśurāmakalpasūtra also is by now completely exhausted and ere long a second edition is likely to be placed before the public.

The work of preparing a revised edition of the work Nityotsava was very kindly entrusted to me by my learned and esteemed friend Dr. Benoytosh Bhattacharyya, M. A., Ph. D. the Director of the Oriental Institute, to whom I hereby offer my sincere and heartfelt thanks for thus presenting me with an opportunity to be of some service to the devotees of Śrī Vidyā in placing before them this revised edition.

In the present edition, I have made use of a MS of the work, which once belonged to the collection of Śrīvijayānanda Nātha of Surat. This was obtained through the kind offices of my friend Kṛṣṇalāl Bhagavānji Manrājī of Dwarka to whom also I take this opportunity of offering my grateful thanks for this act of courtesy. The variants found by me according

to this manuscript have been designated as न and are incorporated in this edition.

The author Umānandanātha refers, in the course of this Paddhati-work, to several Mantras. As the devotees are likely to experience some difficulty in the absence of the full text of these Mantras owing to the original text of Tantras being inaccessible, as also because of the prevailing ignorance in the matter of the theory and practice of this science in modern days, the Mantras have been given in their entirety in the Appendix; and, it is hoped that the enthusiastic devotees will benefit themselves by the same.

The Kulākulacakra likewise was not given in the previous edition. It was obtained through much effort and search, and has been inserted in the Appendix in this edition. The connection existing between the ritualistic portions and the philosophic tenets as taught in the work deserves to be carefully studied according to the traditions of the science and the results arising out of such dicussions explained in the Introduction; for reasons more than one this has to be postponed for some later occasion. In case the work of re-editing the Paraśurāmakalpasūtra comes up in the near future, an attempt will be made in its Introduction to do some justice to the subject. It will also be my earnest endeavour to give in the forthcoming Sūtra edition, the diagrams explaining the various Yantras referred to in the present work.

Umānandanātha, the author and compiler of this work, (referred to on p. 74 of Nityotsava) mentions that he was the disciple of the famous Bhāskararāya Makhīndra, otherwise known as Bhāsurānandanātha. An account of the ideal life led by this

great luminary amongst the Tāntric Ācāryas, his vast learning, the works attributed to him, with a list of the works referred to or quoted by him in his several works, etc., I hope to give in the ensuing edition of the Sūtra, when an opportunity presents itself.

Rāmeśvara, the commentator on Paraśurāmakalpasūtra, in his commentary, entitled the Saubhāgyodaya mentions about himself ( p. 367 ) that he was living in Śaka 1753 ( A.D. 1675 ). As this Rāmeśvara criticises in many places in his work the views held by Umānandanātha, it may be considered as an established fact that Umānanda must have composed his Nityotsava long before this date and, that the work had come into sufficient prominence and recognition by 1753 Śaka or the time when Rāmeśvara flourished. This is corroborated by the fact that Umānandanātha mentions at the close of Nityotsava the date of the composition of his work as being Śaka 1697 (A.D. 1619) or the Kali year 4876.

Umānandanātha is the name of our author as he was known after his Dīkṣā ( or the intitiation ceremony ); while before this event, his name was Jagannātha Pāṇḍita, his father's Bālakṛṣṇa and his mother's Lakṣmī, his gotra being that of Viśvāmitra, and his surname being Śrutapeṭava. He is also said to have been a Mahārāṣṭra Brāhmana who received great honours at the hands of the Maratha Princes of the royal family at Tanjore ; ( *see* Nityosava p. 224 and Bhāskaravilāsa, verse 111.)

Among the 58 works referred to by our author in the present work, about 32 works are at present available, and the remaining too may be brought to light some day, if the collection of MSS and the publication of rare works are carried on with greater zeal than at present.

When the available Tāntric works will be studied by scholars and the deserving among them published, the research scholar studying the science from the historical standpoint, as well as others in India interested in the science itself, will, it is hoped, find themselves in a position to benefit themselves immensely; for, the revival of Tāntric culture means the revival of the spiritual culture for which India had ever been famous.

Baroda,
13th January 1931

TRIVIKRAMA TIRTHA.

# नित्योत्सवः

## श्री उमानन्दनाथविरचितः

### आरम्भोल्लासः प्रथमः—दीक्षाक्रमः

#### भूमिका

नत्वा नाथपरम्परां शिवमुखां विघ्नेश्वरं श्रीमहा-
राज्ञीं तत्सचिवां तदीयपृतनानाथां तदन्तःपराम् ।
एषामावृतिदेवताः परिचितान् रश्मिस्रजो निर्जरान्
वीराँश्च प्रणये निबन्धनमिदं नाम्नाऽपि नित्योत्सवम् ॥
अन्तेवसता शम्भोरवतारेणाच्युतस्य षष्ठेन ।
प्रकृतयति कल्पसूत्रं प्रोक्तं रामेण यत्र गदितोऽर्थः ॥
काश्याश्चोळान् समागत्य कावेर्यङ्कविहारिणा ।
नाथेन भासुरानन्दनाथेनास्मीह योजितः ॥
यस्यादृष्टो नास्ति भूमण्डलांशो
यस्यादासो विद्यते न क्षितीशः ।
यस्याज्ञातं नैव शास्त्रं किमन्यैः
यस्याकारः सा परा शक्तिरेव ॥
भृगुरामसूत्रजालकभग्नप्रसरस्य मे द्विजस्येह ।
ग्रन्थिविमोकधुरीणं गुरुचरणस्मरणमेव मार्गकरम् ॥
आरम्भ-तरुण-यौवन-प्रौढ-तदन्तोन्मनानवस्थाऽऽख्यैः ।
सूत्रोदितैस्तु सप्तभिरुल्लासैराश्रितेह विश्रान्तिः ॥
येषु दीक्षा-गणेश-श्री-श्यामा-क्रोडी-परा-क्रमाः ।
सामान्यश्च क्रमोऽन्येषां क्रमेण प्रतिपादिताः ॥

प्रतिपाद्येषु मुख्यत्वमङ्गताऽन्यच्च यद्भवेत् ।
तत्सर्वं **श्रीगुरुप्रोक्ते रत्नालोके**ऽधिगम्यताम् ॥
न्यायोपसंहृतैरङ्गैः प्रयुञ्जानस्य मे क्रमान् ।
भ्रम[1]प्रमादस्खलितं [2]समादधतु तद्विदः ॥
सूत्रसंसूचितानुक्ताविरुद्धाङ्गेतिकार्यता ।
तन्त्रान्तरात् सम्प्रदायादप्युक्तेह क्वचित् क्वचित् ॥
इह क्रमाणां सर्वेषां **श्रीक्रमः प्रकृति**र्मतः
अतिदिश्य तमन्यत्र विशेषस्तु निरूप्यते ॥
[3]क्रमान्तरेषु चाङ्गानां विज्ञेया श्रीक्रमेऽपि च ।
पौर्वापर्यभिदा तत्तत्खण्डसूत्रक्रमानुगा ॥
श्रेयोऽर्थिनः साधकस्य साङ्गे श्रीसुन्दरीक्रमे ।
आवश्यकत्वात् प्रथमं **दीक्षाविधि**रुदीर्यते ॥

## दीक्षाकालनिर्णयः

तस्य च कालनिर्णयो **मन्थानभैरवतन्त्रे**—

वैशाखे सिद्धिदा दीक्षा श्रावणे वृद्धिदा नृणाम् ।
आश्विने सर्वसिद्धिः स्यात् कार्तिके ज्ञानवृद्धिदा ॥
शुभदा मार्गशीर्षे च माघे स्वर्णफलप्रदा ।
फाल्गुने सर्वसिद्धिः स्यादन्येऽनिष्टफलप्रदाः ॥

इति ।

**सारसङ्ग्रहे** 'मलमासं विवर्जयेत्' इत्युक्तम् । इदं क्षयमासस्याप्युपलक्षणम् । तत्रैव—

1 प्रमादस्ख—भ.

2 समयन्त्विह साधवः—अ, भ.

3 अयं श्लोकः अ, अ१, कोशयोरेव दृश्यते.

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल ।
बुधे सौन्दर्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ ॥
शुक्रे सौभाग्यमाप्नोति . . . . . . . . . . ॥ इति ॥
द्वितीयायां भवेत् ज्ञानं तृतीयायां भवेच्छुचिः ।
पञ्चम्यां बुद्धिवृद्धिः स्यात् सौख्यं स्यात्सप्तमीदिने ॥
दशम्यां राजसौभाग्यं एकादश्यां शुचिर्भवेत् ।
द्वादश्यां सर्वसिद्धिः स्यात् पूर्णिमा सर्वसिद्धिदा ॥ इति ॥
अस्वाध्यायं विवर्जयेत् . . . . . . . . ॥ इति ॥

अस्वाध्यायं सन्ध्यागर्जितनिर्घोषभूकम्पादिनिमित्तकानध्यायदिवसानित्यर्थः ।

अश्विन्यां सुखमाप्नोति रोहिण्यां वाक्पतिर्भवेत् ।
पुनर्वसौ धनाढ्यः स्यात् पुष्ये शत्रुविनाशनम् ॥
मघायां दुःखहानिः स्याद्रूपदा पूर्वफल्गुनी ।
ज्ञानं चोत्तरफल्गुन्यां हस्तायां च बली भवेत् ॥
चित्रायां ज्ञानसिद्धिः स्यात् स्वात्यां शत्रुविनाशनम् ।
अनूराधा बुद्धिवृद्ध्यै [1]कीर्त्यै स्यातां ततः परे ॥
[2]पूर्वाषाढोत्तराषाढे [3]सर्वसम्पत्तिदायिके ।
बुद्धिः शतभिषायां स्यात् पूर्वभाद्रे सुखी भवेत् ॥
सौख्यं चोत्तरभाद्रायां रेवत्यां कीर्तिवर्धनम् ॥ इति च ॥
योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनः शुभः ।
सुकर्मा च धृतिर्वृद्धिर्ध्रुवः सिद्धिश्च हर्षणः ॥
वरीयाँश्च शिवः सिद्धो ब्रह्मा चैन्द्रोऽप्यमी शुभाः ॥ इति च ॥
बवादिवणिजान्तानि करणानि शुभाप्तये ॥ इति च ॥

**वैशम्पायनसंहितायां—**

मन्त्राद्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।
कर्कटे सर्वसिद्धिः स्यात् कन्या लक्ष्मीप्रदा नृणाम् ॥

1 मूलं सर्वसमृद्धिकृत्—अ. 2 एतदर्धं अ. कोश एव दृश्यते. 3 भवेतां कीर्तिदायिके—अ.

तुलायां सर्वसिद्धिः स्यात् सर्वलाभश्च वृश्चिके ।
मकरं पुत्रदं प्राहुः [1]कुम्भो धनसमृद्धिदः ॥
शुक्लपक्षे शुभा दीक्षा कृष्णेऽप्यापञ्चमीदिनात् ।
भूतिकामैः सिते पक्षे मुक्तिकामैः सितेतरे ॥ इति ॥

अत्र च गुरुभार्गवमौढ्यं चन्द्रतारानुकूल्यं लग्नस्य ग्रहबलादिकं च विचार्यम् ग्रहबलं तु—

त्रिषडायगताः पापाः शुभाः केन्द्रत्रिकोणगाः ।
दीक्षायां तु शुभाः सर्वे रन्ध्रस्थाः सर्वनाशकाः ॥

आयः एकादशस्थानम् । पापाः पापग्रहाः रविभौमशनिराहुकेतुक्षीणेन्दुपापयुक्ताः । सौम्याः शुभाः शुभग्रहाः अक्षीणेन्दुपापयोगरहितबुधगुरुभृगवः । केन्द्राणि प्रथमचतुर्थसप्तमदशमस्थानानि । त्रिकोणे पञ्चमनवमस्थाने । सर्वे पापाः शुभाश्च ग्रहाः उक्तस्थानगताः दीक्षायां शुभावहा एव । एत एव रन्ध्रे अष्टमस्थाने स्थिता यदि सर्वनाशका इति योजना ॥

अथ उक्तकालमन्तरेण दीक्षार्हः कालो यथा **तन्त्रान्तरे**—

विषुवेऽप्ययनद्वन्द्वे सङ्क्रान्त्यां दमनोत्सवे ।
दीक्षा कार्या त्वकालेऽपि पवित्रे गुरुपर्वणि ॥

विषुवे—मेषतुलासङ्क्रमणयोः इत्यर्थः । अयनद्वन्द्वे—कर्कटमकरसङ्क्रान्त्योः । सङ्क्रान्त्यां—तदन्यासु सङ्क्रान्तिषु इत्यर्थः । दमनोत्सवे—चैत्रपूर्णिमाऽऽदिषु दमनकरणकदेवीपूजादिनेष्वित्यर्थः । पवित्रे—श्रावणपूर्णिमाऽऽदिषु, देव्याः पवित्रारोपणदिवसेषु इत्यर्थः । गुरुपर्वणि—गुरोः जन्मख्यातिदिनयोः । तथा—

षष्ठी भाद्रपदे मासि [2]कृष्णाश्विनचतुर्दशी ।
कार्तिके नवमी शुक्ला मार्गे कृष्णा च पञ्चमी ।
पौषे च पूर्णिमा [3]देवी माघे चैव चतुर्थिका ॥

1 कुम्भः सर्वसमृद्धिकृत्—अ.

2 कृष्णेति काकाक्षिन्यायेनोभयत्रान्वेति—इति टिप्पणी अ, ब २.

3 देवि—अ, ब१, ब२, ब३.

फाल्गुनैकादशी कृष्णा चैत्रे मासि त्रयोदशी ।
वैशाखेऽक्षय्यतृतीया ज्येष्ठे [1]दशहरा स्मृता ।
आषाढे द्वादशी कृष्णा अमावास्या च श्रावणी ।
इमानि देवीपर्वाणि कोटियज्ञफलानि वै ॥

दीक्षाऽर्हाणीति शेषः । दशहरा ज्येष्ठशुक्ल[2]दशमी । **सौभाग्यचन्द्रोदये**[3] अस्मन्नाथचरणैः बहूनि देवीपर्वाणि उक्तानि । यथा—

अमाऽन्तचान्द्रमासेषु चैत्रशुक्लत्रयोदशी ।
चतुर्दश्यपि शुक्लाऽथ वैशाखे शुक्लपक्षगाः ॥
तृतीयैकादशीपौर्णमास्यः कृष्णचतुर्दशी ।
ज्येष्ठे तु शुक्ले दशमी राका कृष्णचतुर्दशी ॥
आषाढे शुक्लपक्षस्थे पञ्चमी च त्रयोदशी ।
श्रावणे मासि शुक्लैकादशी शुक्लचतुर्दशी ॥
कृष्णा पञ्चम्यष्टमी च रोहिणीसहिता यदि ।
नवमी चाथ भाद्रस्य कृष्णषष्ठी तथाऽष्टमी ॥
रोहिणीसहिता चेत् स्यादाश्विने सप्तमी सिता ।
अष्टमी च सिता कृष्णपक्षस्था च चतुर्दशी ॥
कार्तिके शुक्लपक्षस्थे नवमीद्वादशी तिथी ।
मार्गशीर्षे तृतीया च षष्ठी धवळपक्षगे ॥
पौषे चतुर्थीनवमीचतुर्दश्यः सिता मताः ।
दशमी त्वसिता माघे चतुर्थ्येकादशी सिते ॥
चतुर्दश्यसिता चाथ फाल्गुने शुक्लपक्षगे ।
षष्ठीनवम्यौ कृष्णा तु भवेदेकादशीति च ॥
**रत्नावलीकुलोड्डीशयामळाद्यर्थसङ्ग्रहे** ॥ इति ॥

अन्योऽपि विस्तरः तत एव ज्ञातव्यः ॥

1 तु दहरा—अ. 2 नवमी—अ.

3 इतः प्रभृत्युदाहृतवचनानि अ१, ब१, ब३ कोशेष्वेवोपलभ्यन्ते.

सत्तीर्थेऽर्कविधुग्रासे पुण्यारण्ये वनेषु च ।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन् न शोधयेत् ।।

प्रकारान्तरे च—

सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः ।
यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः ।।
सन्तुष्टे च गुरौ तस्य सन्तुष्टाः सर्वदेवताः ।
गुरुं सन्तोषयेत् भक्त्या द्वयमेव तदा भवेत् ।।

द्वयं भोगमोक्षौ । एवकारः अप्यर्थः ।
अधिकारिभेदेन कालो यथा—

मुमुक्षूणां सदा कालः स्त्रीणां कालस्तु सर्वदा ।। इति ।।

## गुरुलक्षणम्

**तन्त्रराजे**—

सुन्दरः सुमुखः स्वस्थः सुलभो बहुतन्त्रवित् ।
असंशयः संशयच्छिन्निरपेक्षो गुरुर्मतः ।।
सौन्दर्यमनवद्यत्वं रूपे सुमुखता पुनः ।
स्मेरपूर्वाभिभाषित्वं स्वच्छताऽजिह्मवृत्तिता ।।
सौलभ्यमप्यगर्वित्वं सन्तोषो बहुतन्त्रता ।
असंशयस्तत्त्वबोधः तच्छित्[1]तत्प्रतिपादनात् ।।
नैरपेक्ष्यमवित्तेच्छा गुरुत्वं हितवेदिता ।
एवंविधो गुरुर्ज्ञेयस्त्वितरः शिष्यदुःखदः ।।

अजिह्मवृत्तितेति छेदः । बहुतन्त्रता—बहुतन्त्रवेदिता इत्यर्थः ।।

## शिष्यलक्षणम्

तथा—

चतुर्भिराद्यैः सहितः श्रद्धावान् सुस्थिराशयः ।
अलुब्धः स्थिरगात्रश्च प्रेक्ष्यकारी जितेन्द्रियः ।।

१ तच्छित्—संशयच्छित् ।

आस्तिको दृढभक्तिश्च गुरौ मन्त्रे [1]सदैवते ।
एवंविधो भवेच्छिष्य इतरो दुःखकृद्गुरोः ॥ इति ॥

चतुर्भिराद्यैरिति सुन्दरत्वादिभिः । अन्यान्यपि तल्लक्षणानि **कुलार्णवादितन्त्रेषु** बहुळमुपलभ्यमानानि ग्रन्थगौरवभयात् नेह लिखितानि ।

शिष्यपरीक्षाकालोऽपि तत्रैव—

एकद्वित्रिचतुःपञ्चवर्षाण्यालोच्य योग्यताम् ।
भक्तियुक्तान् गुणांश्चाऽपि क्रमाद्वर्णे ससङ्करे ।
पश्चादुक्तक्रमेणैव वदेद्विद्यामनन्यधीः ॥ इति ॥

ससङ्करे, अनुलोमजातिसहिते । वर्णे, ब्राह्मणादिवर्णेषु इत्यर्थः । एकवर्षं ब्राह्मणस्य योग्यतापरीक्षा, क्षत्रियादिषु द्व्यादिसंवत्सरपरीक्षा इत्यर्थः ॥

एवमुक्तान्यतमे काले उक्तलक्षणो गुरुः उक्तलक्षणं परीक्ष्य शिष्यं दीक्षयेत् ॥

## गुरुवरणम्

तत्र निर्वर्तितस्नाननित्यविधिः साधको वाद्यघोषपुरस्सरं ब्राह्मणैः स्वस्ति वाचयित्वा आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य **श्रेयस्कामोऽहं अमुकविद्याग्रहणार्थं अमुकगुरोः दीक्षां ग्रहीष्यामीति** सङ्कल्प्य सोपहारो गुरुमुपसृत्य दण्डवत् प्रणम्य गुरोराज्ञया पुनर्देशकालौ सङ्कीर्त्य **अमुकगोत्रोऽमुकशाखाऽध्यायी अमुकशर्मवर्मादिरहं चतुर्विधपुरुषार्थसिद्ध्यर्थं स्वेष्टमनुग्रहणाय अमुकगोत्रं अमुकशाखाऽध्यायिनं अमुकशर्माणं त्वां गुरुत्वेन वृणे** इति क्रमुकादिना गुरुं वृणुयात् ॥

## क्रमप्रवर्तनपूर्वकं शिष्याह्वानम्

स च **वृतोऽस्मी**त्युक्त्वा सशिष्यः सामयिकैः सह गोमयेनोपलिप्तं रङ्गवल्लीपुष्पमालावितानाद्यलङ्कृतं मण्डपं विविक्तं दीक्षाप्रदेशं आसाद्य पादौ प्रक्षाळ्य आचम्य मण्डपान्तः प्रविश्य वक्ष्यमाणविधिना आसने उपविश्य कृतभूतशुद्धिप्राणप्रतिष्ठाकश्च वक्ष्यमाणेन प्रकारेण गणपति-ललिता-श्यामा-वार्ताळी-पराणां पञ्चानामपि देवतानां पदार्थानुसमयेन[2] काण्डानुसमयेन[3] वा यागमन्दिरप्रवेशादिचक्रपूजाऽन्त (१), तदादि-

1 स्वदैवते—श्री.
2 एकैकोपचारदानं सर्वासां देवतानां पूजने ।
3 एकां सर्वोपचारैर्देवतां संपूज्य ततो द्वितीयां तृतीयां चेति क्रमः ।

विघ्नोत्सारणान्त (२), तदादिन्यासान्त (३), तदादिपात्रासादनान्त (४), तदादिलयाङ्गपूजान्त (५), तदाद्यावरणार्चनान्त (६), तदादिहवनान्त (७), तदादिसौभाग्यहृदयामर्शनान्त (८), तदादिहविःप्रतिपत्त्यन्त (९), तदादिदेवतोद्वासनान्त (१०), तदादिविशेषार्घ्यविसर्जनान्तेषु (११), पदार्थेषु यागगृहप्रवेशादिहवनान्तं पदार्थानुसमयेन काण्डानुसमयेन वा क्रमं प्रवर्त्य तरुणोल्लासवान् शिष्यमाहूय नूतनेन वाससा तस्य मुखं बद्ध्वा गणपत्यादिमूलमन्त्रानुच्चारयन् पात्रपञ्चकसामान्यार्घ्योदकबिन्दुभिः तमवोक्ष्य त्रैपुरं तन्त्रसिद्धान्तं श्रावयेत् ॥

## त्रैपुरसिद्धान्तः

यथा—पृथिव्यप्तेजोवायुवियन्ति **भूतानि** पञ्च । गन्धरसरूपस्पर्शशब्दाः **तन्मात्राणि** पञ्च । उपस्थपायुपादपाणिवाचः **कर्मेन्द्रियाणि** पञ्च । घ्राणरसनाचक्षुस्त्वक्श्रोत्राणि **ज्ञानेन्द्रियाणि** पञ्च । रजःसत्त्वतमोरूपाणि **अहङ्कारबुद्धिमनांसि** अन्तःकरणवृत्तित्रयम् । **प्रकृति**स्त्रिगुणसाम्यरूपा । चित्तं **पुरुषो** जीवः । परमशिवगताः स्वतन्त्रता-नित्यता-नित्यतृप्तता-सर्वकर्तृता-सर्वज्ञताऽऽख्या धर्मा एव सङ्कुचिताः सन्तो जीवे क्रमात् **नियति-काल-राग-कला-विद्या**शब्दवाच्या भवन्ति । **माया** जगत्परमशिवयोः भेदबुद्धिः । **शुद्धविद्या** तयोरभेदधीः । जगदिदंतया पश्यन् परमशिव **ईश्वरः** । तदहन्तया पश्यन् स एव **सदाशिवः** । **शक्तिः** परमशिवस्य जगत्सिसृक्षा । तद्वान् स एव तत्त्वेषु प्रथमतत्त्वरूपः **शिवः** । इति **षट्त्रिंशत्तत्त्वा**न्येव एतद्दर्शनप्रमेयजातम् । एतदात्मकं विश्वमेव परमशिवशरीरम् । प्रागुक्तनियत्यादितत्त्वपञ्चकाख्यापरपर्यायेण लीलास्वीकृतेन कञ्चुकेन आवृतस्वरूप ईश्वर एव जीवः । तद्विनिर्मुक्तः परमशिवः । स्वस्वरूपावबोधः पुरुषार्थः[1] ॥

## मन्त्रोपासनम्

शब्दाः वर्णात्मका नित्याश्च । मन्त्राणाम् अनन्यादृशं सामर्थ्यम् । स्वगुरुपरम्परोपदेशैकगम्यधर्मरूपेण सम्प्रदायेन गुरुशास्त्रदेवतासु विश्वासेन च सर्वाः सिद्धयः ।

1 स्वतन्त्रादिना सङ्कुच्य स्वीकृतेन आवृतस्वरूपः शिव एव मायया सञ्जातकञ्चुकितः स एव जीवः इत्यधिकः पाठो दृश्यते (अ) कोशे.

एतच्छास्त्रप्रामाण्यं विश्वासैकसमधिगम्यम् । गुरुमन्त्रदेवताऽऽत्मनां श्रीगुरूक्तपथेन ऐक्यविभावनात् मनःपवनयोः एकयत्ननिरोद्धव्यत्वज्ञानाच्च प्रत्यगात्मवेदनम् । स्वरूपानन्दाभिव्यञ्जकैः पञ्चमकारैः अर्चनमुपह्वरे । प्राकव्यान्निरयः । भावनादार्ढ्यात् निग्रहानुग्रहसामर्थ्यलाभः ॥

## उपासकधर्माः

दर्शनान्तराणामनिन्दनम् । स्वोपास्यदेवतामन्तरा क्वापि महत्त्वबुद्ध्यभावः । सच्छिष्य एव रहस्यप्रकाशनम् । सदा स्वोपास्यमन्त्रानुसन्धानम् । सततं शिवोऽहमिति भावनम् । कामक्रोधलोभमोहमदमात्सर्याणां अविहितहिंसायाश्चौर्यस्य जनविरोधस्य स्त्रिया विद्वेषस्य विद्विष्टस्य च वर्जनम् । सर्वज्ञस्यैकस्य गुरोः उपास्तिः । गुरुवाक्य-शास्त्रादौ सर्वत्रासंशयः । स्वैकोपभोगबुद्ध्या धनाद्यनार्जनम् । फलमनभिसन्धाय कर्माचरणम् । अलोपः स्ववर्णाश्रमोक्तानां नित्यानां कर्मणाम् । मपञ्चकस्यालाभेऽपि नित्यसपर्यानिर्वर्तनम् । वैधानुष्ठाने सर्वतो निर्भयता ॥

## सर्वसारभूतो धर्मः

वृत्तिभिः वेद्यं सर्वं हविः । इन्द्रियाण्येव स्रुचः । सङ्कोचेन स्वात्मस्थिताः सर्वज्ञत्वसर्वकर्तृत्वादयः परमशिवशक्तय एव ज्वालाः । स्वात्मशिव एव पावकः । स्वयमेव होता । निर्गुणब्रह्मापरोक्ष्यं फलम् । स्वपारमार्थिकस्वरूपलाभान्न परं विद्यते ॥

सेयमेतच्छास्त्रमर्यादा ॥

## दीक्षाऽऽवश्यकत्वम्

वेश्या इव प्रकटा वेदादयो विद्याः । सर्वेषु दर्शनेषु गुप्तेयं विद्या । तत सर्वथा मतिमान् दीक्षेतेति ॥

## शाम्भवी दीक्षा

अथ शिष्यस्य शिरसि कामेश्वरीकामेश्वरयोः **रक्तशुक्लाख्यचरण**न्यासं[1] भावयित्वा तदमृतक्षरणेन तस्य बाह्यमाभ्यन्तरं च मलं दूरीकुर्यात् । एषा चरणविन्यासरूपा शाम्भवी दीक्षा ॥

[1] परिशिष्टे १ मे

### शाक्ती दीक्षा

अथ शिष्यस्यामूलाधारं आ च ब्रह्मरन्ध्रं प्रज्वलन्तीं ज्वलदनलनिभां परचिद्रूपां प्रकाशलहरीं ध्यात्वा[1] तत्किरणैः तस्य पापपाशान् दहेत् । इयं शक्तिप्रवेशनरूपा शाक्ती दीक्षा द्वितीया ॥

### मान्त्री दीक्षा

ततः शुण्ठी–मरीचि–पिप्पली–हरीतकी–धात्रीफल–विभीतकत्वगेला-लवङ्ग-पत्र-नागकेसर-तक्कोल[2]-मदयन्ती-सहदेवीसंज्ञानां **त्रयोदशानां** वस्तूनां चूर्णमिश्रेण दूर्वाभस्मभ्यां गजाश्वशालाचतुष्पथवल्मीकनदीसङ्गमह्रदगोष्ठसमानीताभिः सप्तभिः मृत्तिकाभिश्च उपेतेन चन्दनकाश्मीरगोरोचनकर्पूरैः चतुर्भिः सुरभिळेन शुचिना जलेन पूर्णं नवीनवासोयुगवेष्टितं ईशानतः शालितण्डुलपुञ्जोपरि निहितं नूतनं कलशं आग्नेयादिविदिक्षु मध्ये प्रागादिदिक्षु च बालाषडङ्गेन अभ्यर्च्य तदन्तर्ललिताश्यामावाराहीणां चक्राणि[3] विनिक्षिप्य तत्र पुनः तास्तिस्रो देवताः त्रिः तत्तन्मूलेन तत्तदावरणानि च तत्तन्मन्त्रैः समभ्यर्च्य कुम्भमस्त्रमन्त्रेण संरक्ष्य प्रदर्श्य धेनुयोनिमुद्रे चक्राणि यथास्थानमवस्थापयेत् ॥

ततः सक्षीरेण सिन्दूरकुङ्कुमादिना चन्दनादिपीठे [4]मातृकायन्त्रं विलिख्य[5] तत्र शिष्यं निवेश्य तेन कुम्भाम्भसा ललिताश्यामावार्ताळीमूलविद्याभिः स्नपयेत् । **मातृकायन्त्रं** तु

व्योमेन्द्वौरसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं
पत्रान्तर्गतपञ्चवर्गयशळार्णादित्रिवर्गं क्रमात् ।
आशास्वश्रिषु लान्तलाङ्गलियुजा क्षोणीपुरेणावृतं
वर्णाब्जं शिरसि स्थितं विषगदप्रध्वंसि मृत्युञ्जयम् ॥ इति ॥

अस्यार्थः—व्योम हकारः । इन्दुः सकारः । औ इति रूपम् । रसनार्णः विसर्गः । एतत्पिण्डः कर्णिकायां यस्य तथोक्तम् । क्रमात् प्राच्यादित इत्यर्थः ।

[1] मूलमंत्रार्थानुसंधानपूर्वं मूलमंत्राक्षरोत्पन्नरूपां च ध्यात्वेत्यर्थः ।
[2] कंकोल इति ‘ न ’
[3] चक्रप्रतिकृतयो देयाः परिशिष्टे २ ये
[4] अस्य प्रतिकृतिरपि परिशिष्टे २ ये
[5] प्राणप्रतिष्ठापूर्वकं संपूज्य

अचां अकारादिविसर्गान्तानां षोडशानां स्वराणाम् । द्वन्द्वैः अं आं इत्यादिभिः । लिखितैरिति शेषः । स्फुरन्तः केसराः दळद्वयमध्यभागाः अष्टौ यस्य तत् तथोक्तम् । पत्राणां दळानां अन्तः अभ्यन्तरे गताः लिखिताः पञ्चवर्गाः कचटतपादीनि पञ्चपञ्चाक्षराणि यशळार्णादयः यादिवान्तशादिहान्तळक्षात्मिकाः त्रिवर्गाः यस्य तत्तथोक्तम् । आशासु प्राच्यादिषु अश्रिषु आग्नेयादिकोणेषु च क्रमात् ळान्तेन[1] वकारेण लाङ्गलिना ठकारेण युज्यत इति तथोक्तेन क्षोणीपुरेण चतुरश्रेण आवृतम् । वर्णाब्जं मातृकापद्मम् । शिरसि स्थितं भावितं सदिति शेषः । विषगदप्रध्वंसि विषरोगयोः प्रध्वंसनशीलम् । अन्ततो मृत्युञ्जयं च भवतीत्यर्थः ॥

एतल्लेखनप्रकारो यथा—चतुरश्रालङ्कृतं सकेसरमष्टदळकमलं विलिख्य तत्कर्णिकायां हकारसकारौकारविसर्गात्मकं बीजं, तत्केसरेषु प्राच्यादित अकारादिस्वरद्वन्द्वं, दळोदरेषु कचटतपयशळाख्यवर्गाष्टकं, चतुरश्रस्य बाह्यतः प्रागादिदिक्षु वकारं आग्नेयादिविदिक्षु ठवर्णं च लिखेत् । सर्वेषामक्षराणां सबिन्दुकत्वं सम्प्रदायादिति ॥

ततः परिहितदुकूलं सुरभिळचन्दनानुलिप्ताङ्गं मल्लिकाऽऽदिमाल्यधारिणं सुप्रसन्नं शिष्यं पार्श्वे निवेश्य वक्ष्यमाणप्रकारेण तदङ्गेषु अकारादिक्षकारान्तैकपञ्चाशन्मातृकान्यासं[2] विधाय विमुक्तमुखबन्धवाससः तस्य हस्ते क्रमात् त्रीन् प्रथमासिक्तान् चन्दनोक्षितान् द्वितीयखण्डान् पुष्पखण्डांश्च विनिक्षिप्य वक्ष्यमाणैः [3]**तत्त्वमन्त्रैः** ग्रासयित्वा गुरुः तस्य [4]दक्षिणकर्णे ललिताक्रमे वक्ष्यमाणं **श्रीविद्यागुरुपादुका**मन्त्रमुपदिश्य[5] **बाला**मुपदिशेत्[6] । तत्र अमुकपदस्थाने स्वस्य स्वशक्तेश्च दीक्षानाम्नोरूहः ॥

स्त्रीणां तु वाग्दीक्षैव विहिता नान्येति **तन्त्रसारे** स्थितम् । वाग्दीक्षा मन्त्रोपदेशः ॥

एषा मान्त्री दीक्षा ॥

[1] न्यासप्रकरणोक्तः [2] परिशिष्टे १ मे

[3] आन्हिकप्रकरणे पृ. ३७ । पं. १

[4] "दक्षिणकर्णे दशमखण्डोक्तत्रितारीबालापूर्वक आत्मनः पादुकामन्त्रमुपदिश्य बालामुपदिशेत्" इत्यपि पाठान्तरम्—अ१, भ. [5] परिशिष्टे १ मे

[6] गुरोः कर्तृत्वादुपदेशक्रियायाः आत्मनः स्वस्येत्यस्त्य गुरोः पादुकेत्येवेत्यर्थः ।

### दीक्षात्रये मुख्यगौणपक्षौ

इत्थमुक्तं दीक्षात्रयं एकप्रयोगेण एकस्मिन्नेव काले दद्यादिति मुख्यपक्षः, 'सर्वाश्च कुर्यात्' इति **सूत्रात्**। कतिपयकालव्यवधानेन क्रमादेकामेकामेव वेति तु गौणः, 'एकैकां वेत्येके' इति **सूत्रात्**॥

### इष्टमन्त्रदानम्

एवं इदं दीक्षात्रयं निर्वर्त्य पश्चात् तस्मा **इष्टं मन्त्रं** दद्यात्। ततो गुरुः शिष्यशिरसि स्वचरणौ निवेश्य इष्टमन्त्रक्रमोपयुक्तान् सर्वान् अङ्गमन्त्रान्[1] तस्मिन्नेव काले क्रमेण वा यथाऽधिकारमुपदिश्य स्वाङ्गेषु किमप्यङ्गं शिष्यं स्पर्शयित्वा तदङ्गमातृकाक्षरादिं द्व्यक्षरं त्र्यक्षरं चतुरक्षरं वा **आनन्दनाथशब्दान्तं** तस्य **नाम** कृत्वा दशमखण्डोक्तानाचाराननुशिष्यात्॥

### समयाचारानुशासनम्

यथा—व्यवहारं देशं च स्वस्य स्वात्म्यबलसहायवयांसि च प्रविचार्यैव पञ्चमाः स्वीकर्तव्याः। सर्वैः प्राणिभिः अविरोद्धव्यम्। उपासनापरिपन्थिनो विनिग्रहीतव्याः। आश्रिता अनुग्रहीतव्याः। स्वगुरुवत् गुरोः पुत्रे कळत्रे ज्येष्ठादिषु च वर्तितव्यम्। मकारत्रितये इतिकर्तव्यता गुरुशास्त्रसम्प्रदायतो ज्ञातव्या। सर्वस्मिन् विषये वचनपूर्वकमेव प्रवर्तितव्यम्। दश कुलवृक्षाः न छेत्तव्याः। ते च—

> श्लेष्मातककरञ्जाक्षनिम्बाश्वत्थकदम्बकाः।
> बिल्वो वटोदुम्बरौ च तिन्त्रिणी च दश स्मृताः॥

स्त्रीवृन्दक्षीरकलशसिद्धलिङ्गिविविधक्रीडाकुलकुमारीकुलसहकाराशोकैकतरुपितृवनमत्तवाराङ्गनारक्तांशुकामत्तेभान् दृष्ट्वा वन्दितव्यम्। कृष्णाष्टमीकृष्णचतुर्दशीदर्शपूर्णिमासङ्क्रमणाख्येषु पञ्चपर्वसु विशेषतो नैमित्तिकी वरिवस्या कर्तव्या। साधकस्य आरम्भ-तरुण-यौवन-प्रौढ-तदन्तोन्मनानवस्थाऽऽख्येषु सप्तसु उल्लासेषु प्रौढोल्लासान्तमेव हविःप्रतिपत्तिः। समयाचाराँश्च प्रवर्तेरन्। ततः परां दशां प्राप्तानां स्वैरचारित्वम्। तत्र तादृशो **वीर** इति व्यवह्रियते। वीरव्यवहारेषु अन्यथासम्भावनया अधः पतेत्। अतः तथा नाचरेत्।

[1] यथा श्रीक्रमाङ्गभूता मन्त्राः परि० १ मे

रक्तायास्त्यागं, विरक्ताया हठादाक्रमणं, उदासीनाया धनादिना प्रलोभनं च वर्जयेत् । करुणाशङ्काभयलज्जाजुगुप्साकुलजात्यभिमानशीलानि क्रमेण त्यजेत् । विहितहिंसाऽऽदौ करुणाऽऽदीनां प्रातिकूल्येन तत्त्याग उक्त इति भावः । गुरुपरमगुर्वोः समागमने प्रथमं परमगुरुं प्रणमेत् । तदग्रे गुर्वनुमत्या तन्नतिं कलयेत् । पूज्येषु न पराङ्मुखो भवेत् । मुख्यतया स्वप्रकाशमात्मानं अनुसन्दध्यात् । शरीरं अर्थं असूँश्च गुर्वर्थं धारयेत् । तदुक्तं कुर्यात् । तद्वचसि युक्तायुक्तं न विचारयेत् । सर्वत्र व्यवस्थां तन्यात् । सत्यं वदेत् । परधनं न स्पृहयेत् । आत्मस्तुतिं परनिन्दां मर्मस्पृग्वचनं परिहासं धिक्कारमाक्रोशं त्रासोत्पादनं च न विदध्यात् । सर्वप्रयत्नेन परदेवताऽऽराधनद्वारा पूर्णज्ञानात्मकं ब्रह्मभावमभिलषेत् । एतानन्यांश्च **मन्वादिभि**रुक्तान् एतदविरुद्धान् आचारान् अङ्गीकुर्यात् ।

### कुलधर्मनिष्ठाफलम्

इत्थं विदित्वा विधिवत् अनुतिष्ठन् कुलधर्मनिष्ठः सर्वथा कृतकृत्यो भवति । तस्य शरीरत्यागे श्वपचगृहे वा काश्यां वा न विशेषः । स तु जीवन्मुक्त एवेति ॥

### शिष्यस्य परचिद्रूपापादनम्

ततो देहेन्द्रियादिविलक्षणमवस्थात्रयसाक्षि सच्चिदानन्दात्मकं प्रत्यगभिन्नं ब्रह्मैव त्वमसीति शिष्याय आत्मतत्त्वमुपदिश्य ललिताश्यामावार्ताळीविद्याभिः तदङ्गं त्रिः परिमृज्य परिरभ्य तं मूर्ध्न्युपाघ्राय स्वमिव शिष्यमपि परचिद्रूपं कुर्यात् ॥

### सर्वमन्त्राधिकारलाभः

सोऽपि श्रीगुरूपदिष्टप्रकारेण क्षणमात्मानं पूर्णं भावयित्वा कृतार्थः सन् यथाविभवं श्रीगुरुं वसुवसनाभरणादिभिः आराध्य तस्मात् विदितवेदितव्यरहस्यजातोऽशेषमन्त्राधिकारी भवेत् ॥

ततो गुरुः हविःप्रतिपत्त्यादिविशेषार्घ्यविसर्जनान्तं विधिशेषं निर्वर्तयेत् ॥

### तत्तत्क्रमानुष्ठाने दीक्षाव्यवस्था

[1]अनेनैव—एकस्मिन्नेव काले समुच्चितेन वा अन्यतमेनैकैकेन कालभेदात्—दीक्षाविधिना गणपत्यादीनामुक्तानां पञ्चानां देवतानामपि क्रमानुष्ठानं सम्भवति । न तु

[1] " अनेन एकस्मिन्नेव काले समुच्चितेन अन्यतमेन वा एकेनैव दीक्षाविधिना गणपत्यादीनां " इति ( अ ) पाठः—" अनेनैव दीक्षाविधिना गणपत्यादीनां " इति ( ब २ ) पाठः.

पृथक् पृथक् दीक्षणम् । सामान्यपद्धत्युक्ततत्तन्मन्त्रमात्रोपासकस्य तु पृथक् पृथगेव दीक्षा । बालोपासकस्य तु मन्त्रदीक्षाऽऽत्मतया बालाया उपदेशः, एवं इष्टमनुत्वेनाप्युपदेशो ज्ञेयः । ललिताऽङ्गत्वेन श्यामाऽऽदीनां तिसृणामुपास्तेः कृताकृतत्वज्ञापकात् तदकरणपक्षे गणपतेः ललितायाश्च क्रमं प्रवर्त्य उभयोरेव पात्राण्यासाद्य चक्रराजमात्रं कलशे निक्षिप्य श्रीविद्यया केवलं शिष्यं स्नपयित्वा तदङ्गं च परिमृज्य शेषमशेषं अनुतिष्ठेत् । गणपतिश्यामाऽऽदीनां अन्यासां च देवतानां स्वातन्त्र्येण एकैकोपास्तौ तु तत्तत्क्रममात्रं प्रवर्त्य तत्तत्पात्रे आसाद्य तत्तद्यन्त्रं कुम्भे निक्षिप्य तत्तन्मन्त्रेण स्नानाङ्गपरिमार्जने कुर्यात् । अवशिष्टं अविशिष्टमिति विवेकः ॥

## अधिकारिनिर्णयः

[1]**सुन्दरीमहोदये** तु—अस्यां च दीक्षायां त्रैवर्णिकस्यैव अधिकारः, " सर्वशास्त्रार्थवेदार्थज्ञानिने सुव्रताय च । दीक्षा देया " इति **मूले ज्ञानार्णवतन्त्रे** अधिकार्युक्तेः—इति स्थितम् । शक्तीनां तु ओवत्रयांतर्गुरुमण्डलान्तर्दर्शनज्ञापकबलात् अस्त्येवाधिकार इति रहस्यमिति शिवम् ॥

इति श्रीभासुरानन्दनाथचरणारविन्दमिलिन्दायमानमानसेन उमानन्दनाथेन निर्मिते अभिनवे कल्पसूत्रानुसारिणि नित्योत्सवनिबन्धे दीक्षासमारम्भनिरूपणं नामारम्भोल्लासः प्रथमः सम्पूर्णः

---

[1] अयं ग्रन्थभागः ( भ ) कोशे नास्त्येव. अन्यकोशेषु केषु चित् पृथक संयोजितः

## तरुणोल्लासो द्वितीयः—गणपतिक्रमः

### उपोद्घातः

नत्वा श्रीभासुरानन्दनाथपादाम्बुजद्वयम् ।
तनोत्युमाऽऽनन्दनाथस्तरुणोल्लासमादृतः ॥
यत्रोच्यते जगन्मातुः यावज्जीवार्चनाविधौ ।
प्रत्यूहापोहनिपुणा पद्धतिर्गणनायकी ॥
स्वतन्त्रोपास्तिविषया पृथग्दीक्षेह सम्मता ।
न श्रीक्रमाङ्गभावे साऽप्यारम्भोल्लास ईरिता ॥
इह श्रीं ह्रीं कामबीजयोगोऽङ्गमनुषु स्मृतः ।
असूत्रितोऽपि **श्रीविद्यार्णवादौ** कथितो हि सः ॥

### काल्यकृत्याह्निकयोर्विशेषः

तत्र तावत् काल्यकृत्याह्निकयोः वक्ष्यमाणश्रीक्रमतो विशेषो यथा—श्रीगुरुपादुकायां आदौ त्रितार्युत्तरं बाला वाक् ग्लौमिति पञ्चबीजयोजनम् । हृदयकमलकर्णिकायां उद्यदरुण-किरणकोटिपाटलस्य देवस्य करटिवदनस्य ध्यानेन परिप्लुष्टनिःशेषदोषत्वं आत्मनः तत्प्रभाऽ-रुणतनुत्वभावनं च । रश्मिस्रगननुस्मरणम् । तत्र तत्र यथोचितं सम्बुद्ध्यादीनामूहः । सवितृमण्डले वक्ष्यमाणं देवस्य ध्यानम् ।

तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः[1] प्रचोदयात् ॥

इति मन्त्रेण त्रिः अर्घ्यदानम् । ऋष्यादिन्यासत्रयमिह वक्ष्यमाणं चेति ॥

### चतुरावृत्तितर्पणसंकल्पादि

ततः आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य **मम श्रीमहागणपतिप्रसादसिद्ध्यै चतुरावृत्तितर्पणं करिष्ये** इति सङ्कल्प्य नद्यादौ हस्तमात्रं चतुरश्रमण्डलं परिगृह्य

[1] न्ती इति 'न'.

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥

इति मन्त्रेण सूर्यमभ्यर्थ्य

आवाहयामि त्वां देवि तर्पणायेह सुन्दरि ।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ॥

इति गङ्गां प्रार्थ्य [1]ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इत्युच्चार्य क्रों इत्यङ्कुशमुद्रया गङ्गाऽऽदितीर्थान्यावाह्य वं इत्यमृतबीजेन सप्तवारमभिमन्त्र्य तत्र चतुरश्राष्टदळषट्कोणत्रिकोणात्मकं महागणपतियन्त्रं विचिन्त्य स्वदेहे ऋष्यादिन्यासान् न्यस्य यन्त्रे सावरणं देवमावाह्य

श्रीं ह्रीं क्लीं महागणपतये लं पृथिव्यात्मकं गन्धं कल्पयामि नमः । (त्रिवारम्[2])
३ महागणपतये हं आकाशात्मकं पुष्पं कल्पयामि नमः । (त्रिवारम्)
३ महागणपतये यं वाय्वात्मकं धूपं कल्पयामि नमः । (त्रिवारम्)
३ महागणपतये रं वह्न्यात्मकं दीपं कल्पयामि नमः । (त्रिवारम्)
३ महागणपतये वं अमृतात्मकं नैवेद्यं कल्पयामि नमः । तदङ्गत्वेन
३ महागणपतये सं सर्वात्मकं ताम्बूलं कल्पयामि नमः । (त्रिवारं)

इति पञ्चोपचारैः अर्चयेत् ॥

## चतुरावृत्तितर्पणम्

प्रथमं प्रत्यावृत्ति मूलान्ते महागणपतिं तर्पयामीति द्वादशवारं तर्पयित्वा ततः स्वाहाऽन्तेन मूलस्यैकैकेन वर्णेन चतुश्चतुर्वारं प्रतिवर्णान्तमावृत्तेन मूलेन च प्राग्वत् चतुश्चतुर्वारं देवं, त्रयोदशसु मिथुनेषु श्रीश्रीपत्यादिषु एकैकां देवतां द्वितीयान्तेन तत्तन्नाम्ना चतुश्चतुर्वारं प्रतिदेवतमावृत्तेन च मूलेन देवं चतुश्चतुर्वारं तर्पयेत् । यथा—

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा
महागणपतिं तर्पयामि ॥ द्वादशवारम् ॥

३ ॐ स्वाहा महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

[1] ह्रां, ह्रीं . . . इति—भ.

[2] अत्र केचित् सकृत् सकृत् एव उपचारमन्त्रान् पठन्ति । संशोधकः ।

३ श्रीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ ह्रीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ क्लीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ ग्लौं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ गं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ गं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ णं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ पं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ तं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ ये स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ वं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ रं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ वं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥
मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ रं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ दं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ सं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ वँ स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ जं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ नं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ में स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ वं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ शं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ मां स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ नं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ यं स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ स्वां स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ हां स्वाहा । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

मूलं । महागणपतिं तर्पयामि ।। चतुर्वारम् ।।

३ श्रियं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ श्रीपतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ गिरिजां स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ गिरिजापतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ रतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ रतिपतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ महीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ महीपतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ महालक्ष्मीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ महागणपतिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ ऋद्धिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ आमोदं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ समृद्धिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ प्रमोदं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ कान्तिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ सुमुखं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ मदनावतीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ दुर्मुखं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ मदद्रवां स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ अविघ्नं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ द्राविणीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ विघ्नकर्तारं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ वसुधारां स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ शङ्खनिधिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ वसुमतीं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

३ पद्मनिधिं स्वाहा । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

मूलं । महागणपतिं तर्पयामि ॥ चतुर्वारम् ॥

इत्याहत्य तर्पणसङ्ख्यापिण्डश्चतुश्चत्वारिंशदुत्तरचतुश्शती ४४४ भवति ॥

अथ पुनर्मूलेन देवं उक्तया रीत्या पञ्चधा उपचर्य आत्मन्युद्वासयेत् ॥

इति **चतुरावृत्तितर्पणविधिः** ॥

---

## पूजाविधिः

### यागमन्दिरागमनादि विघ्नोत्सारणान्तम्

ततो यागगृहमागत्य स्थण्डिलं गोमयेनोपलिप्य यागमन्दिरं च रङ्गवल्लीपुष्पमालिका-वितानादिभिः अलङ्कृत्य च द्वारस्य दक्षवामभागयोः ऊर्ध्वभागे च क्रमेण—

श्रीं ह्रीं क्लीं **भद्रकाल्यै नमः** ॥ दक्षशाखायाम् ॥

३ **भैरवाय नमः** ॥ वामशाखायाम् ॥

३ **लम्बोदराय नमः** ॥ ऊर्ध्वशाखायाम् ॥

इति तिस्रो द्वारि देवताः सम्पूज्य अन्तः प्रविष्टः सपर्यासामग्रीं दक्षभागे निधाय दीपानभितः प्रज्वाल्य दीपौ वा गन्धादिभिः कृतात्मालङ्करणः ताम्बूलेन जातीपत्र-फललवङ्गैलाकर्पूराख्यपञ्चतिक्तेन वा सुरभिळवदनः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि बालातृतीयबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते आसने ३ आधारशक्तिकमला-सनाय नमः इति प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेनासनेनोपविश्य ३ **रक्तद्वादशशक्तियुक्ताय दीपनाथाय नम** इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा ३ **समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नम** इति मूर्धनि बद्धाञ्जलिः स्ववामदक्ष-पार्श्वयोः क्रमेण **श्रीगुरुपादुकया** गुरुं **मूलेन** च देवं प्रणम्य स्वस्य तदैक्यं भावयन्—

श्रीं ह्रीं क्लीं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया ॥

इति **मन्त्रं** सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रितयक्रूरदृष्ट्यवलोकन-पूर्वकताळत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् ॥

ताळत्रयं नाम दक्षतर्जनीमध्यमाभ्यां अधोमुखाभ्यां वामकरतले सशब्दमुपर्युपरि त्रिरभिघातः ॥

## शिखाबन्धनादि मातृकान्यासान्तम् ।

ततो **नम** इत्यङ्गुष्ठमन्त्रमुच्चार्य [1]अंकुशेन[2] शिखां बद्ध्वा श्रीक्रमे वक्ष्यमाणेन प्रकारेण भूतशुद्धिमात्मनः प्राणप्रतिष्ठां च विधाय विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा मूलेन प्राणानायम्य तेजोरूपदेवानन्यं भावयन् आत्मानं ऐं ह्रः अस्त्राय फट् इति मन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादिकरतलान्तं कूर्परयोश्च विन्यस्य देहे च व्यापकं कृत्वा श्रीक्रमे वक्ष्यमाणं मातृकान्यासं विदध्यात् । तत्र च श्रीं ह्रीं क्लीं इति त्रिबीजं प्रथमं योजयेत् इति विशेषः ॥

## षडङ्गन्यासः

ततः

श्रीं ह्रीं क्लीं ॐ गां अंगुष्ठहृदयाय नमः ॥

३ श्रीं गीं तर्जनीशिरसे स्वाहा ॥

३ ह्रीं गूं मध्यमाशिखायै वषट् ॥

३ क्लीं गैं अनामिकाकवचाय हुम् ॥

३ ग्लौं गौं कनिष्ठिकानेत्रत्रयाय वौषट् ॥

३ गं गः करतलकरपृष्ठास्त्राय फट् ॥

इति षडङ्गमन्त्रानङ्गुष्ठादिषु हृदयादिषु च न्यस्य मूलेन त्रिर्व्यापकं कुर्यात् ॥

## ध्यानम्

ततो ध्यानम्—

ततो हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया ।
सिद्धलक्ष्म्या समाश्लिष्टपार्श्वमर्धेन्दुशेखरम् ॥

[1] 'अंगुष्ठेन' इत्यपि वा स्यात्—अंगुष्ठमन्त्रेण 'नमः' इत्यनेनेत्यर्थः ( कल्पसूत्रे ८ खण्डे १० सूत्रं दर्शनीयम् )—( संपादकः ).

[2] अङ्कुशेन इति अङ्कुशबीजेन क्रों इत्यनेनेति सम्प्रदायः ।

वामाधःकरतो दक्षाधःकरान्तेषु पुष्करे ।
परिष्कृतं मातुलुङ्गगदापुण्ड्रेक्षुकार्मुकैः ॥
शूलेन [1]शङ्खचक्राभ्यां पाशोत्पलयुगेन च ।
शालिमञ्जरिकास्वीयदन्ताञ्चलमणीघटैः ॥
स्रवन्मदं च सानन्दं श्रीश्रीपत्यादिसंवृतम् ।
अशेषविघ्नविध्वंसनिघ्नं विघ्नेश्वरं स्मरेत् ॥

### अर्घ्यसंस्कारः

अथ तं मानसैः पञ्चोपचारैः अभ्यर्च्य श्रीक्रमे वक्ष्यमाणेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत् । तत्र चोभयोरर्घ्ययोरप्युक्तं षडङ्गमाधारस्थापनादिषु क्रमेण—

श्रीं ह्रीं क्लीं अं अग्निमण्डलाय दशकलाऽऽत्मने अर्घ्यपात्राधाराय नमः ॥
३ उं सूर्यमण्डलाय द्वादशकलाऽऽत्मने अर्घ्यपात्राय नमः ॥
३ मं सोममण्डलाय षोडशकलाऽऽत्मने अर्घ्यामृताय नमः ॥

इत्येव **मन्त्राः, गणपतिगायत्र्योक्तया**—

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

इत्यनया **ऋचा** चाभिमन्त्रणम्, चतुर्नवतिमन्त्राद्यभिमन्त्रणाभावश्चेति विशेषः । अथ सामान्यार्घ्यजलबिन्दुभिः आत्मानं पूजोपकरणानि च सम्प्रोक्ष्य विशेषार्घ्यजलबिन्दुभिः स्वशिरसि गुरुपादुकां त्रिरिष्ट्वा सपर्यासामग्रीं पावयित्वा ॥

### पीठे प्राणप्रतिष्ठा

पुरतो रक्तचन्दनादिभिः निर्मिते पीठे कलधौतादिविरचितां महागणपतिप्रतिमां वा ध्यानोक्तरूपां चतुरश्राष्टदळषडरत्रिकोणात्मकं सिन्दूरादिना लिखितं लेखितं वा यन्त्रं, धातुमयं वा निवेश्य—

[1] पद्मच—अ.

श्रीगणेशयन्त्रस्य प्राणा इह प्राणाः श्रीगणेशयन्त्रस्य जीव इह स्थितः श्रीगणेशयन्त्रस्य सर्वेन्द्रियाणि श्रीगणेशयन्त्रस्य वाङ्मनःप्राणा इह आयान्तु स्वाहा ॥

इति **मन्त्रेण** प्राणप्रतिष्ठां विदध्यात् ॥

### पीठशक्तिपूजा

तस्य त्रिकोणे स्वाग्रादिप्रादक्षिण्येन परितो मध्ये च क्रमेण—

| | | | | | |
|---|---|---|---|---|---|
| १ | श्रीं ह्रीं क्लीं | तीव्रायै नमः ॥ | ६ | श्रीं ह्रीं क्लीं | उग्रायै नमः ॥ |
| २ | ३ | ज्वालिन्यै नमः ॥ | ७ | ३ | तेजोवत्यै नमः ॥ |
| ३ | ३ | नन्दायै नमः ॥ | ८ | ३ | सत्यायै नमः ॥ |
| ४ | ३ | भोगदायै नमः ॥ | ९ | ३ | विघ्ननाशिन्यै नमः ॥ |
| ५ | ३ | कामरूपिण्यै नमः ॥ | | | |

इति नवगणेशपीठशक्तीरभ्यर्च्य

### धर्माद्यष्टकपूजा

तत्रैव आग्नेय्यादिविदिक्षु प्रागाद्यासु च दिक्षु क्रमेण—

| | | | | | |
|---|---|---|---|---|---|
| १ | श्रीं ह्रीं क्लीं | ऋं धर्माय नमः ॥ | ५ | श्रीं ह्रीं क्लीं | ॠं अधर्माय नमः ॥ |
| २ | ३ | ॠं ज्ञानाय नमः ॥ | ६ | ३ | ॠं अज्ञानाय नमः । |
| ३ | ३ | ऌं वैराग्याय नमः ॥ | ७ | ३ | ऌं अवैराग्याय नमः ॥ |
| ४ | ३ | ॡं ऐश्वर्याय नमः ॥ | ८ | ३ | ॡं अनैश्वर्याय नमः ॥ |

इति चार्चयेत् ॥

### महागणपतिपूजा

ततो मनसा ध्यातं महागणपतिं भक्तानुग्रहात्तेजोरूपेण परिणतं प्रापय्य ब्रह्मरन्ध्रं वहन्नासापुटाध्वना निर्गमय्य कुसुमगर्भितेऽञ्जलौ मूर्तं **मूलमन्त्रान्ते** महागणपतिमावाहयामीति त्रिकोणे आवाह्य " आवाहितो भव " इत्यादिक्रमेण श्रीक्रमे वक्ष्यमाणतत्तन्मुद्राप्रदर्शनपूर्वकं आवाहन-संस्थापन-सन्निधापन-सन्निरोधन-

सम्मुखीकरणावगुण्ठनादि कृत्वा वन्दनधेनुयोनिमुद्राश्च प्रदर्श्य सामान्यार्घ्योदकेन प्राग्वत् गन्धादिपञ्चोपचारान् आचरेत् ॥

## महागणपतितर्पणम्

ततो मूलान्ते श्रीमहागणपतिश्रीपादुकां पूजयामीति वामकरतत्त्वमुद्रया सन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दुदक्ष[1]करोपात्तकुसुमयुगपत्प्रक्षेपेण देवं दशवारं उपतर्पयेत्। तत्त्वमुद्रा उत्तरत्रापि साधारणी।

## षडङ्गपूजा

ततो देवस्य अग्नीशासुरवायुकोणेषु मौळौ प्रागादिदिक्षु च क्रमेण—

श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि ॥
३ श्रीं गीं शिरसे स्वाहा शिरश्शक्तिश्रीपादुकां पूजयामि ॥
३ ह्रीं गूं शिखायै वषट् शिखाशक्तिश्रीपादुकां पूजयामि ॥
३ क्लीं गैं कवचाय हुम् कवचशक्तिश्रीपादुकां पूजयामि ॥
३ ग्लौं गौं नेत्रत्रयाय वौषट् नेत्रत्रयशक्तिश्रीपादुकां पूजयामि ॥
३ गं गः अस्त्राय फट् अस्त्रशक्तिश्रीपादुकां पूजयामि ॥

इति समभ्यर्च्य

## ओघत्रयपूजा

देवस्य पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं यजेत् ॥ यथा—

### दिव्यौघः

श्रीं ह्रीं क्लीं विनायकसिद्धाचार्यश्रीपादुकां पूजयामि ।
३ कवीश्वरसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ विरूपाक्षसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ विश्वसिद्धाचार्यश्रीपादुकां पूजयामि ॥

[1] करज्ञानमुद्रोपात्त—अ.

३ ब्रह्मण्यसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ निधीशसिद्धाचार्यश्रीपादुकां पूजयामि ॥

### सिद्धौघः

श्रीं ह्रीं क्लीं गजाधिराजसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ वरप्रदसिद्धाचार्यश्रीपादुकां पूजयामि ॥

### मानवौघः

श्रीं ह्रीं क्लीं विजयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ दुर्जयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ जयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ दुःखारिसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सुखावहसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ परमात्मसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सर्वभूतात्मसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ महानन्दसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ फालचन्द्रसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सद्योजातसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ बुद्धसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ शूरसिद्धाचार्यश्रीपादुकां पूजयामि ॥

---

### दिव्यौघपाठान्तरम्

श्रीं ह्रीं क्लीं विनायकसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ विरूपाक्षसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ बुद्धसिद्धाचार्यश्रीपादुकां पूजयामि ॥

३ शूरसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ वरप्रदसिद्धाचार्यश्रीपादुकां पूजयामि ॥

## सिद्धौघपाठान्तरम्

श्रीं ह्रीं क्लीं विजयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ दुर्जयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ जयसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ कवीश्वरसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ ब्रह्मण्यसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ निधीशसिद्धाचार्यश्रीपादुकां पूजयामि ॥

## मानवौघपाठान्तरम्

श्रीं ह्रीं क्लीं गजाधिराजसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ दुःखारिसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सद्योजातसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सुखावहसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ परमात्मसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ सर्वभूतात्मसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ महानन्दसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ शुभानन्दसिद्धाचार्यश्रीपादुकां पूजयामि ॥
३ फालचन्द्रसिद्धाचार्यश्रीपादुकां पूजयामि ॥

( गुर्वौघत्रयसंख्या विंशतिः )

---

## आवरणार्चनम्

### प्रथमावरणम्

त्र्यश्रषडश्रयोरन्तराळे प्रागादिदिक्षु क्रमेण—

श्रीं ह्रीं क्लीं श्रीश्रीपतिश्रीपादुकां पूजयामि ॥

३ गिरिजागिरिजापतिश्रीपादुकां पूजयामि ॥

३ रतिरतिपतिश्रीपादुकां पूजयामि ॥

३ महीमहीपतिश्रीपादुकां पूजयामि ॥

### द्वितीयावरणम्

षडश्रे देवाग्रकोणमारभ्य प्रादक्षिण्येन तद्दक्षवामपार्श्वयोश्च क्रमेण यजेत्—

श्रीं ह्रीं क्लीं ऋद्ध्यामोदश्रीपादुकां पूजयामि ॥

३ समृद्धिप्रमोदश्रीपादुकां पूजयामि ॥

३ कान्तिसुमुखश्रीपादुकां पूजयामि ॥

३ मदनावतीदुर्मुखश्रीपादुकां पूजयामि ॥

३ मदद्रवाविघ्नश्रीपादुकां पूजयामि ॥

३ द्राविणीविघ्नकर्तृश्रीपादुकां पूजयामि ॥

३ वसुधाराशङ्खनिधिश्रीपादुकां पूजयामि ॥

३ वसुमतीपद्मनिधिश्रीपादुकां पूजयामि ॥

### तृतीयावरणम्

षडश्रसन्धिषट्के प्राग्वत्[1] षडङ्गदेवताऽर्चनम् ॥

### चतुर्थावरणम्

अष्टदळे पश्चिमादिदिक्षु वायव्यादिविदिक्षु च प्रादक्षिण्यक्रमेण—

श्रीं ह्रीं क्लीं आं ब्राह्मीश्रीपादुकां पूजयामि ॥

३ ईं माहेश्वरीश्रीपादुकां पूजयामि ॥

[1] पृ. २५ पं. ७

३ ऊं कौमारीश्रीपादुकां पूजयामि ॥

३ ॠं वैष्णवीश्रीपादुकां पूजयामि ॥

३ ॡं वाराहीश्रीपादुकां पूजयामि ॥

३ ऐं माहेन्द्रीश्रीपादुकां पूजयामि ॥

३ औं चामुण्डाश्रीपादुकां पूजयामि ॥

३ अः महालक्ष्मीश्रीपादुकां पूजयामि ॥

### पञ्चमावरणम्

अथ चतुरश्रस्य रेखायां प्रागाद्यासु अष्टसु दिक्षु क्रमेण—

श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये
ऐरावतवाहनाय सपरिवाराय नमः ॥

३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये
अजवाहनाय सपरिवाराय नमः ॥

३ टां यमाय दण्डहस्ताय प्रेताधिपतये
महिषवाहनाय सपरिवाराय नमः ॥

३ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये
नरवाहनाय सपरिवाराय नमः ॥

३ वां वरुणाय पाशहस्ताय जलाधिपतये
मकरवाहनाय सपरिवाराय नमः ॥

३ यां वायवे ध्वजहस्ताय प्राणाधिपतये
रुरुवाहनाय सपरिवाराय नमः ॥

३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये
अश्ववाहनाय सपरिवाराय नमः ॥

३ हां ईशानाय त्रिशूलहस्ताय
विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः ॥

सर्वा आवरणदेवताः देवस्याभिमुखासीनाः स्वयं तत्तदभिमुखः पूजयामीति भावयेत् ॥

### गणनाथस्य पुनस्तर्पणं षोडशोपचारपूजा च

एवं पञ्चावरणीं इष्ट्वा पुनर्देवं दशधा प्राग्वदुपतर्प्य [1]षोडशभिः उपचारैः आराधयेत् । [ ते च ] पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरयुग-दर्पणनैवेद्यपानीयताम्बूलाख्याः । मन्त्रास्तु—श्रीं ह्रीं क्लीं महागणपतये पाद्यं कल्पयामि नमः इत्यादयः । नैवेद्ये त्रिकोणवृत्तचतुरश्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया अमृतीकरणम्, मूलेन सप्तवाराभिमन्त्रणम्, प्राणादिमुद्राप्रदर्शनं च कुर्यात् । इहापरिगणितान्यपि पूर्वोत्तरापोशनहस्तप्रक्षाळनगण्डूषपुनराचमनीयानि नैवेद्याङ्गत्वेन पूर्ववत् कल्पयेत्[2] ॥

### अग्निकार्यम्

अथ श्रीक्रमे वक्ष्यमाणेन विधिना स्थण्डिलकल्पनादिप्रधानदेवतापञ्चोपचारान्तं कृत्वा

श्रीं ह्रीं क्लीं श्रियै स्वाहा । श्रिया इदं न मम ॥

३ श्रीपतये स्वाहा । श्रीपतय इदं न मम ॥

इत्यादिरीत्या[3] पञ्चममिथुनवर्जं श्र्यादिविघ्नकर्तृपर्यन्ताः विंशतिदेवता उद्दिश्य चतुर्थ्यन्तैः बीजत्रयाद्यैः स्वाहाशिरस्कैः तत्तन्नाममन्त्रैः आज्येन एकैकवारं उद्देशत्यागपूर्वकं हुत्वा अथ प्रधानदेवतायै महागणपतये मूलेन दशवारं हुत्वा वक्ष्यमाणप्रकारेण बलिं प्रदाय महाव्याहृत्यादिविधिशेषं निर्वर्तयेत् ॥

### बलिदानम्

होमाकरणपक्षे बलिमात्रं दद्यात् । यथा—[4]पुरतः स्ववामभागे त्रिकोणवृत्त चतुरश्रात्मकं मण्डलं कृत्वा ऐं व्यापकमण्डलाय नमः इति गन्धादिभिरभ्यर्च्य अर्धभक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि दत्वा बाणमुद्रया बलिं भूतैः ग्राहितं विभाव्य प्रणमेदिति ॥

[1] परमानन्दतंत्रादिषु च नैते । अन्य एव । ते च । पाद्यमर्घ्यमाचमनस्नानवस्त्रभूषणगंध-पुष्पधूपदीपनैवेद्यताम्बूलनीराजनपुष्पांजलिपरिक्रमणनत्यंताः ॥ संपादकः

[2] "ताम्बूलं च" इत्यधिकः—अ, भ.    [3] तर्पणोक्तक्रमानुसारेण ।

[4] यागगृहाद्बहिः वामभागे—अ.

## तर्पणजपस्तोत्राणि

अथ प्रक्षाळितपाणि[1]पाद आचान्त आगत्य देवं मूलेन त्रिधा सन्तर्प्य पुष्पाञ्जलिं दत्वा प्रदक्षिणनुतीर्विधाय जपेत्—

अस्य श्रीमहागणपतिमहामन्त्रस्य गणकऋषये नम इति शिरसि। निचृद्गायत्रीछन्दसे नम इति मुखे। महागणपतये देवतायै नम इति हृदये। गं बीजाय नम इति गुह्ये। स्वाहाशक्त्यै नम इति पादयोः। ॐ कीलकाय नम इति नाभौ। मम अभीष्टसिद्ध्यै विनियोगाय नम इति करसम्पुटे च न्यस्य। उक्तैः षडङ्गमन्त्रैः अङ्गुष्ठादिषु हृदयादिषु च न्यासं विधाय। पूर्वोक्तभङ्ग्या ध्यात्वा। श्यामाक्रमे वक्ष्यमाणप्रकारेण संस्कृतां[2] मालामादाय श्रीक्रमे वक्ष्यमाणविधिना मूलमष्टोत्तरशत-वारानावर्त्य[3] पुनरपि न्यासादि कृत्वा

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा॥

इति सामान्यार्घ्योदकेन जपं देवस्य दक्षकरे समर्पितं विभाव्य स्तुवीत। यथा—

श्रीभगवानुवाच।

गणेशस्य स्तवं वक्ष्ये कलौ झटिति सिद्धिदम्।
न न्यासो न च संस्कारो न होमो न च तर्पणम्॥
न मार्जनं च [4]पञ्चाढ्यं सहस्रजपमात्रतः
सिध्यत्यर्चनतः पञ्चशतब्राह्मणभोजनात्॥

अस्य श्रीगणपतिस्तोत्रमालामन्त्रस्य भगवान् श्रीसदाशिव ऋषिः। [5]उष्णिक् छन्दः। श्रीगणपतिर्देवता। श्रीगणपतिप्रसादसिद्ध्यर्थे जपे विनियोगः।

ध्यानम्—

चतुर्भुजं रक्ततनुं त्रिणेत्रं पाशाङ्कुशौ मोदकपात्रदन्तौ।
करैर्दधानं सरसीरुहस्थं गणाधिनाथं शशिचूडमीडे॥ इति॥

[1] पादमाचान्तमागत्य—इति पाठः बहुषु कोशेषु दृश्यते. [2] पृ. १६३ पं. २४.
[3] पृ. १२२ पं. ३. [4] पञ्चास्य—अ. [5] अष्टिः—ब१, ब२, ब३, भ.

## सदाशिवप्रोक्तं गणेशाष्टकम्

ॐ विनायकैकभावनासमर्चनासमर्पितं
प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम् ।
यदर्पितं समर्पितं नवन्यधान्यनिर्मितं
नखण्डितं नखण्डितं नखण्डमण्डनं कृतम् ॥

सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं
निरञ्जनं च निर्गुणं निराकृतिं च निष्क्रियम् ।
सदात्मकं चिदात्मकं सुखात्मकं परं पदं
भजामि तं गजाननं स्वमाययाऽऽत्तविग्रहम् ॥

गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरः
त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः ।
त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरः
चराचरप्रचारहेतुरन्तरायशान्तिकृत् ॥

अनेकदं तमालनीलमेकदन्तसुन्दरं
गजाननं नुमो गजाननामृताब्धिमन्दिरम् ।
समस्तवेदवादसत्कलाकलापमन्दिरं
महान्तरायदुस्तमश्शमार्कमाश्रितोदरम् ॥

सरत्नहेमघण्टिकानिनादनूपुरस्वनैः
मृदङ्गताळनादभेदसाधनानुरूपतः ।
धिमिद्धिमित्ततोऽङ्गतोङ्गथेयिथेयिशब्दतो
विनायकश्शशाङ्कशेखराग्रतः प्रनृत्यति ॥

नमामि नाकनायकैकनायकं विनायकं
कलाकलापकल्पनानिदानमादिपूरुषम् ।
गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं
स्वपादमूलसेविनामपारवैभवप्रदम् ॥

भजे प्रचण्डतुन्दिलं सदन्दशूकभूषणं
सनन्दनादिवन्दितं समस्तसिद्धसेवितम् ।

सुरासुरौघयोस्सदा जयप्रदं भयप्रदं
समस्तविघ्नघातिनं स्वभक्तपक्षपातिनम् ॥
कराम्बुजात्तकङ्कणः पदाब्जकिङ्किणीगणो
गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः ।
जगत्त्रयान्तरायशान्तिकारकोऽस्तु तारको
भवार्णवादनेकदुर्ग्रहाच्चिदेकविग्रहः ॥
यो भक्तिप्रवणः परावरगुरोस्स्तोत्रं गणेशाष्टकं
शुद्धस्संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् ।
तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सारदा
स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ॥

## सुवासिनीपूजा

ततः श्रीक्रमे वक्ष्यमाणेन क्रमेण सुवासिनीपूजनहविःप्रतिपत्तिदेवतोद्वासनादिशेषं समापयेत् । अत्र च सुवासिन्या साकं बटुकार्चनमपि । तत्र मन्त्रः—३ बं बटुकाय वँ बटुकाय नमः इति । मम निर्विघ्नं मन्त्रसिद्धिर्भूयादिति तौ प्रति प्रार्थनायां तथाऽस्त्विति तत्प्रतिवचनम् । मूलान्ते अमुकतत्त्वं शोधयामि नमः स्वाहेति तत्त्वत्रयशोधनं चेति विशेषः ॥

## पुरश्चरणविधिः

एवं नित्यक्रमं प्रवर्तयन् श्यामाक्रमे[1] वक्ष्यमाणेन विधिना अष्टाविंशतिसहस्रसङ्ख्यापुरश्चरणजपः । प्रकृते कलियुगत्वात् तच्चतुर्गुणितम् । प्रथमेऽहनि सहस्रं ततः प्रत्यहं त्रिसहस्रसङ्ख्यं च कृत्वा जपदशांशहोम–तद्दशांशतर्पण–तद्दशांशब्राह्मणभोजनानि विदध्यात् । होमद्रव्याणि च—

मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः ।
नारिकेळैस्तिलैः शुद्धैः सुपक्वैः कदळीफलैः ॥

इत्युक्तान्यष्टौ । एतेषां प्रमाणं तु—मोदका अखण्डिता ग्रासमिताः । पृथुकलाजसक्तवो मुष्टिपरिमिताः । इक्षुप्रमाणं श्लोक एवोक्तम् । नारिकेळं अष्टधा खण्डितम् । तिलाः

[1] पृ० १५७

चुलुकप्रमाणाः शतसङ्ख्याका वा। कदळीफलमल्पं यद्यखण्डितम्, पृथु चेद्यथारुचि खण्डितम्। अमीषां द्रव्याणां मधुक्षीरघृतसिक्तानां पृथक्पृथगाहुतयो होमसङ्ख्या-पिण्डाष्टमभागमिताः ३५०। श्लोकपाठक्रमेण भवन्ति। अष्टद्रव्यहोमात् प्रागावरण-देवतानां एकैकाहुतिः प्रधानदेवतायाश्च [1]या दशाहुतयः ताः आज्येनैव भवन्ति। तर्पणपूर्वाङ्गं तु चतुरावृत्तितर्पणवदेव॥

इत्थं पुरश्चरणेन सिद्धमनुः, स्वातन्त्र्येणोपास्तौ च श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः, काम्यापेक्षी चेत् श्यामाक्रमे वक्ष्यमाणेन तत्तत्कामानुगुणेन द्रव्येण इष्ट्वा सिद्धसङ्कल्पः सुखी विहरेत॥ इति शिवम्॥

इति श्रीभासुरानन्दनाथचरणारविन्दमिळिन्दायमानमानसेन उमानन्दनाथेन निर्मिते कल्पसूत्रानुसारिणि नित्योत्सवनिबन्धे महागणपतिक्रमनिरूपणं नाम तरुणोल्लासो द्वितीयः समाप्तः

---

[1] यावदाहु—अ१.

## यौवनोल्लासः तृतीयः—श्रीक्रमः

नत्वा श्रीभासुरानन्दनाथपादाम्बुजद्वयम् ।
युनक्त्युमानन्दनाथो यौवनोल्लासमद्भुतम् ॥
महात्रिपुरसुन्दर्या मतोऽत्र यजनक्रमः ।
कीर्त्यन्ते गणपत्यादिक्रमा यदुपजीविनः ॥

आद्याय श्रीभासुरानन्दनाथाचार्यायास्मद्गुरवे ह्युमानन्दनाथः ।
श्रेयोमूलं साधकानां तनोति यौवनोल्लासं श्रीक्रमोपक्रमेण ॥

इह सप्तप्रकरणान्याह्निकेन सपर्यया ।
होममुद्रान्यासजपनैमित्तिकसमर्चनैः ॥
आह्निके श्रीगुरुध्यानं प्राणसंयमनं ततः ।
चिद्विमर्शो हृदा मूलावृत्ती रश्मिसरस्मृतिः ॥
स्नानं सन्ध्याविधानं च पूजाप्रकरणे पुनः ।
द्वारपूजाऽऽत्मनैपथ्यं आसनावस्थितिक्रमः ॥
दीपनाथसपर्या च श्रीचक्रपरिकल्पनम् ।
मन्दिरार्चा भूतशुद्धिः प्रत्यूहोत्सारणं ततः ॥
न्यासजालविधिः पात्रासादनं मातुरर्चनम् ।
मुद्राकृतिः षडङ्गार्चा नित्याश्रीगुरुपूजनम् ॥
नवावृतिसपर्या च श्रीदेवीपुनरर्चनम् ।
अथ कामकलाध्यानं सौभाग्यहृदयस्मृतिः ॥
कृताकृतत्वं होमस्य बलिदानविधिस्तथा ।
जपस्तोत्रे सुवासिन्याः पूजनं तत्त्वशोधनम् ॥

देवतोद्वासनं चाथ विशेषार्घ्यविसर्जनम् ।
सङ्क्षेपार्चाविधिस्तद्वत् क्रत्वर्थनियमास्ततः ॥
श्रीचक्रलेखनोपायस्तत्प्रतिष्ठाविधिस्तथा ।
होमादिप्रक्रियास्तत्तद्विधिज्ञानप्रयोजनाः ॥
सन्तु पद्धतयो लोके कल्पसूत्रानुगाः पराः ।
अनन्यसव्यपेक्षेयं प्रायेणेति विभाव्यताम् ॥
कादिहाद्योः पञ्चदश्योरियं साधारणी मता ।
श्रीषोडश्या विशेषस्तु तत्र तत्र निरूपितः ॥
सर्वश्रीक्रममन्त्रेषु त्रितार्या योजनं पुरः ।
ऐं ह्रीं श्रीमित्यात्मिकायास्सा च तत्पूर्वकेषु न ॥
श्रीमान् प्रोक्तगुणो लब्ध्वा दीक्षामुक्तगुणाद्गुरोः ।
इष्ट्वा महागणपतिमारभेत श्रियः क्रमम् ॥

---

## आह्निकप्रकरणम्

### गुरुध्यानम्

मुहूर्ते ब्राह्म उत्थाय निषण्णः शयने निजे ।
अपलापाय पापानामादावेवं समाचरेत् ॥
स्वब्रह्मरन्ध्रगाम्भोजकर्णिकापीठवासिनम् ।
शिवरूपं श्वेतवस्त्रमाल्यभूषानुलेपनम् ॥
दयाऽऽर्द्रदृष्टिं स्मेरास्यं वराभयकराम्बुजम् ।
वामाङ्कगतया पीतवपुषाऽरुणवेषया ॥
पद्मवत्या वामकरे शक्त्या दक्षभुजावृतम् ।
गौरं श्रीभासुरं नाथं सानन्दं चिन्तयेत् सुधीः ॥

ततः ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं [1]ह्सौं स्हौः अमुकाम्बासहितश्री अमुकानन्दनाथगुरु[2]श्रीपादुकां पूजयामीति मन्त्रान्ते सुमुखसुवृत्तचतुरश्रमुद्गरयोन्याख्याभिः पञ्चभिः मुद्राभिः तं प्रणमेत् । मुद्राप्रकारस्तु तत्प्रकरणे वक्ष्यते ।

ततः—

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे ।
विद्याऽवतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥
नवाय नवरूपाय परमा[3]र्थस्वरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥
स्वतन्त्राय दयाकॢप्तविग्रहाय शिवात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥
विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ।
प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः ।
सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥
[4]इत्येवं पञ्चभिः श्लोकैः स्तुवीत यतमानसः ।
प्रातः प्रबोधसमये जपात् सुदिवसं भवेत् ॥

### प्राणसंयमनम्

अथ तच्चरणकमलयुगळविगळदमृतरसविसरपरिप्लुताखिलाङ्गं आत्मानं भावयन् शिवादिश्रीगुरुभ्यो नम इति मूर्धनि बद्धाञ्जलिः त्रिः प्राणानायच्छेत् । तत्प्रकारस्तु —एकवारमावृत्तया मूलविद्यया पिङ्गळापथेन पूरकं, त्रिरावृत्तया तया मूलाधारानाहताज्ञासंज्ञेषु कमलेषु क्रमेण शोणपीतश्वेतकूटत्रयविभावनापूर्वं सुषुम्नायां कुम्भकं, सकृदावृत्तया च तया इडानाडीवर्त्मना रेचकमिति । इह पूरकरेचकयोः पिङ्गळेडयोः व्यत्ययोऽपि दृष्टोऽन्यत्र ॥

[1] ह्सौः स्हौः—अ १. [2] श्रीपरमगुरुपरमेष्ठिगुरुश्री—अ १. [3] थैकरूपिणे इति पाठः न पुस्तके.
[4] त्वत्प्रसादादहं देव कृतकृत्योऽस्मि सर्वदा । मायामृत्युमहापाशात् विमुक्तोऽस्मि शिवोऽस्मि च ॥ ( इत्यधिकः अ पुस्तके ).

### चिद्विमर्शः

तेन च नियमितपवनमनःस्पन्दः आमूलाधारं आ च ब्रह्मरन्ध्रमुद्गतां तटिल्लता-सदृशाकृतिं तरुणारुणपिञ्जरतेजसं ज्वलन्तीं सर्वकारणभूतां परां संविदं विचिन्त्य

### हृदा मूलावृत्तिः

तद्रश्मिनिकरभस्मितसकलकश्मलजालो मूलं मनसा दशवारमावर्त्य

### रश्मिमालास्मरणम्

वक्ष्यमाणान् रश्मिमालामन्त्रांश्च एकवारमावर्त्तयेत् । रश्मिस्रगावर्तनं तु त्रैवर्णिकविषयम् ॥

यदि प्रबोधसमकालमावश्यकोपाधिस्तदा तन्निरसनपूर्वमुक्तमनुतिष्ठेत् ॥

इति काल्यकृत्यम् ॥

### अजपागायत्रीभावनम्

[1][इति देवीं प्रार्थ्य गुरूपदेशेन ज्ञातं सहजसिद्धं अजपाजपं निवेदयेत् । मया पूर्वेद्युरजपां षट्छताधिक-एकविंशतिसाहस्रिकां निःश्वासोच्छ्वासरूपिणीं मूलाधारादिब्रह्मरन्ध्रान्तसप्तचक्रनिवासिनीभ्यो देवताभ्यो निवेदयामीति सङ्कल्प्य हंसस्सोऽहं इति मन्त्रं पञ्चविंशतिवारं जपित्वा तदुपरि निःश्वासोच्छ्वासादिकं गायत्रीरूपं भावयित्वा ॥

प्रातः प्रभृतिसायान्तं सायादिप्रातरन्ततः ।
यत्करोमि जगद्योने तदस्तु तव पूजनम् ॥]

### भूप्रार्थनादि मुखक्षालनान्तम्

समुद्रवसने देवि पर्वतस्तनमण्डिते ।
विष्णुपत्नि नमस्तुभ्यं पादचारं[2] क्षमस्व मे ॥

[1] [ ] एतच्चिह्नमध्यगतो भागः (श्री, अ १) पुस्तकयोरेव दृश्यते.

[2] ०दस्पर्शं क्ष० इति 'न' पुस्तके पाठः.

इति भूमिं प्रार्थ्य धरणीतलन्यस्तवहन्नाडीपार्श्वपादमुत्थाय ग्रामात् बहिः स्मार्तेन विधिना निर्वर्तितशौचक्रियः

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति मन्त्रेण दन्तधावनकाष्ठमभिमन्त्र्य, ऐं ह्रीं श्रीं क्लीं कामदेवाय सर्वजनप्रियाय नमः इति मन्त्रेण दन्तधावनं, ऐं ह्रीं श्रीं हृल्लेखया जिह्वोल्लेखनं च विधाय, कफविमोचन-नासाशोधनदूषिकानिरसनपूर्वकं विहितविंशतिगण्डूषः, ऐं ह्रीं श्रीं श्रीं—ऐं ह्रीं श्रीं ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः—ऐं ह्रीं श्रीं श्रीं ह्रीं क्लीं—ऐं ह्रीं श्रीं श्रीं [1]सहकलह्रीं श्रीं—इति मन्त्रचतुष्टयेन मुखं प्रक्षाळ्य यथास्मृत्याचामेत् ॥

## स्नानविधिः

ततो नद्यादौ वैदिकस्नानोत्तरं श्रीललिताप्रीत्यर्थं तान्त्रिकस्नानं करिष्ये इति सङ्कल्प्य, जले पुरतो हस्तमात्रं चतुरश्रमण्डलं परिगृह्य, तत्र—

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे ।
तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥

इति सूर्यमभ्यर्थ्य,

आवाहयामि त्वां देवि स्नानार्थमिह सुन्दरि ।
एहि गङ्गे नमस्तुभ्यं सर्वतीर्थसमन्विते ॥

इति गङ्गामर्थयित्वा ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः क्रों इत्यङ्कुशमुद्रया सूर्यमण्डलं भित्त्वा, ततो गङ्गाऽऽदिसर्वतीर्थावाहनोत्तरं वं इति सलिलबीजेन सप्तवारमभिमन्त्र्य, मुहुर्मूलमावर्तयन् मूर्धनि त्रीनुदकाञ्जलीन् दत्वा, त्रिरपश्च पीत्वा, मूलपूर्वं श्रीललितां तर्पयामीति त्रिस्तर्पणं, मूलेन त्रिः प्रोक्षणं च आत्मनो योनिमुद्रया विदध्यात् ॥

[1] सकल--अ, अ१. हसकल--ब२.

गृहे तु विना तर्पणम् । अशक्तौ च स्मार्तेन पथा मन्त्रभस्मस्नानयोरन्यतरं निर्वर्त्य मूलेन त्रिराचमनप्रोक्षणे केवलं कुर्यात् ॥

### सन्ध्याविधिः

अथ धौते वाससी परिधाय विधृतपुण्ड्रः वैदिकीं सन्ध्यामभिवन्द्य तान्त्रिकीमाचरेत् । यथा—मूलेन[1] त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे असे नाभिं हृदयं शिरश्चाभिस्पृशेत्[2] । [3]एवं त्रिराचम्य, पूर्ववत् प्राणानायम्य, त्रिरात्मानं च प्रोक्ष्य, अञ्जलिना सलिलमादाय ऐं ह्रीं श्रीं ह्रां ह्रीं ह्रूं सः मार्त्तण्डभैरवाय प्रकाशशक्तिसहिताय स्वाहेति मन्त्रेण उदयते विवस्वते त्रिरर्घ्यं दत्वा तन्मण्डले श्रीचक्रमनुचिन्त्य तत्र ध्यायेत्—

ध्यायेत् कामेश्वराङ्कस्थां कुरुविन्दमणिप्रभाम् ।
शोणाम्बरस्रगालेपां सर्वाङ्गीणविभूषणाम् ॥
सौन्दर्यशेवधिं सेषुचापपाशाङ्कुशोज्ज्वलाम् ।
स्वभाभिरणिमाद्याभिः सेव्यां सर्वनियामिकाम् ॥
सच्चिदानन्दवपुषं सदयापाङ्गविभ्रमाम् ।
सर्वलोकैकजननीं स्मेरास्यां [4]ललिताम्बिकाम् ॥

अत्रायुधानां क्रमः स्वरूपं च सपर्याप्रकरणे वक्ष्यते ॥

ततः—ऐं ह्रीं श्रीं क ए ई ल ह्रीं त्रिपुरसुन्दरि विद्महे ऐं ह्रीं श्रीं ह स क ह ल ह्रीं पीठकामिनि धीमहि । ऐं ह्रीं श्रीं सकलह्रीं तन्नः क्लिन्ने प्रचोदयात्—इति मन्त्रेण महेश्यै त्रिरर्घ्यं दत्वा मूलेन त्रिः सन्तर्प्य मूलेन पूर्ववदाचम्य [5]जपप्रकरणे वक्ष्यमाणान् ऋष्यादीन् न्यस्य मूलमष्टोत्तरशतवारं आवर्तयेत् । ततः पुनः

[1] मूलखण्डत्रयेण [ कूटत्रयेण ] इति ‘ न ’. [2] ०भिमृशेत् । इति ‘ न ’.

[3] षोडश्युपासनायां तु मूलत्रये दशबीजसम्पुटितेन प्रथमादिखण्डत्रयेण तत्त्वशोधनम् । सर्वेण मूलेन सर्वतत्त्वशोधनं चेति विशेषः। एवमुत्तरत्रापि खण्डत्रयेण ज्ञेयम् ।—इत्यधिकः [अ] पुस्तके.

[4] परदेवतां—अ, अ१, भ.

[5] ह्रां ह्रीं ह्रूं सः मार्ताण्डभैरवं तर्पयामि त्रिः । मूलेन साङ्गां सायुधां सशक्तिकां सवाहनां सपरिवारां श्रीललितामहात्रिपुरसुन्दरीं तर्पयामीति त्रिः सन्तर्प्य आचम्य—इत्यधिकः (अ) पुस्तके.

कराङ्गन्यासादिकं कृत्वा जपं वक्ष्यमाणमन्त्रेण श्रीदेव्यै समर्प्य आचम्य मण्डलस्थं तीर्थं विसर्जनमुद्रया सूर्ये विसृजेत् ॥

इयमेकैव प्रातःसंध्याऽनुष्ठेया सूत्रकारमते नान्या माध्याह्निकादयः ॥

अथ सपर्यासाधनानि सम्पाद्य ब्रह्मयज्ञादि निर्वर्तयेत् इति शिवम् ॥

**आह्निकप्रकरणं प्रथमं समाप्तम्**

---

## सपर्याप्रकरणम्

### यागमन्दिरप्रवेशः

अथ मौनवान् यागमन्दिरमागत्य, गोमयेनोपलिप्तद्वारस्थण्डिलाभ्यन्तरस्य रङ्गवल्ल्याद्यलङ्कृतस्य धूपधूपितस्य बद्धवितानकुसुमस्रजो मण्डपस्य पश्चिमद्वारे तिष्ठन् दक्षवामशाखयोः उर्ध्वभागे च क्रमेण—

ऐं ह्रीं श्रीं भद्रकाल्यै नमः, ३ भैरवाय नमः, ३ लम्बोदराय नमः ॥

इति तिस्रो द्वारदेवताः सम्पूज्य, अन्तः प्रविष्टश्चाचम्य देशकालौ[1] सङ्कीर्त्य मम श्रीललिताप्रसादसिद्ध्यर्थं यथाशक्ति क्रमं निर्वर्तयिष्ये इति सङ्कल्प्य, विधृतारुणवसनाभरणानुलेपनमाल्यः, सङ्कल्पमात्रकल्पिताकल्पो वा, ताम्बूलेन जातीपत्रफललवङ्गैलाकर्पूराख्यपञ्चतिक्तेन वा सुरभिळवदनः समास्तीर्णे ऊर्णावसनमृदुनि शुचिनि बालातृतीय[2]बीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते चित्रकम्बळाद्यन्यतमे आसने ऐं ह्रीं श्रीं आधारशक्तिकमलासनाय नमः इति पुष्पाक्षतैरभ्यर्च्य प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेन आसनेन उपविशेत् ॥

[3][कुलार्णवे—

यदाशाऽभिमुखो मन्त्री त्रिपुरां परिपूजयेत् ।
देवीपश्चात्तदा प्राची प्रतीची त्रिपुरापुरः ॥

इति पूज्यपूजकयोः मध्यं प्रतीचीति नियमः ॥]

[1] अत्र देशस्थाने शक्तिसंगमतंत्रोक्त देशनाम, कालस्थाने चाष्टांगोल्लेखः कार्य इति अभियुक्ताः ।

[2] बीजहंसमन्त्राभ्यां—अ.

[3] अयं भागः ( श्री ) कोश एव.

[1] [शक्तिसङ्गमतन्त्रे नित्यनैमित्तिकपुरश्चरणादिव्यतिरिक्तेषु काम्येषु जपेषु गजाश्वादीनि चरासनान्युक्तानि । तदलाभे मृत्प्रकृतिकानि कुशप्रकृतिकानि वा आन्दोळिकादीनि वृक्षविशेषरूपाणि च कथितानि । विस्तरभिया न तद्वचनलेखः ॥ ]

ततः ऐं ह्रीं श्रीं रक्तद्वादशशक्तियुक्ताय दीपनाथाय नम इति भूमौ पुष्पाञ्जलिं दद्यात् । ततः ऐं ह्रीं श्रीं समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नम इति मूर्धनि बद्धाञ्जलिः स्ववामदक्षपार्श्वयोः क्रमेण पूर्ववत् श्रीगुरुपादुकामनुमुच्चार्य, पञ्चमुद्राभिः श्रीगुरुं महागणपतिमन्त्रेण च गणपतिं प्रणम्य ऐं ह्रीं श्रीं ऐं हः अस्त्राय फट् इत्यस्त्रमन्त्रेण मुहुरावृत्तेन अंगुष्ठादिकनिष्ठान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ॥

### श्रीचक्रपरिकल्पनम्

अथ पुरतश्चतुर्विंशत्यङ्गुलिमितां भूमिमपहाय, गोमयेनोपलिप्ते शुचिनि समे हस्तमात्रस्थण्डिले यथायोग्यपरिमाणे सुवर्णरूप्यताम्रादिपट्टे वा क्षीरमिश्रितेन सिन्दूररजसा कुङ्कुमेन वा हेमादिलेखिनीगृहीतेन बिन्दुत्रिकोणवसुकोणदशारयुग्मचतुर्दशारकर्णिकावृत्ताष्टदळपुनःकर्णिकावृत्तषोडशदळमर्यादावृत्तत्रयचतुरश्रत्रितयात्मकं श्रीचक्रं विलिखेत्, विलेखयेद्वा । स च प्रकारः एतत्प्रकरणावसाने कथयिष्यते ॥

### यन्त्रप्राणप्रतिष्ठा

अथ सूत्रानुक्तामपि साम्प्रदायिकसम्मतां तन्त्रान्तरोदितां यन्त्रप्राणप्रतिष्ठां कुर्यात् । यथा—ऐं ह्रीं श्रीं श्रीचक्रस्य प्राणा इह प्राणाः श्रीचक्रस्य जीव इह स्थितः श्रीचक्रस्य सर्वेन्द्रियाणि श्रीचक्रस्य वाङ्मनःप्राणाः इह आयान्तु स्वाहा इति । एवमेव आत्मप्राणप्रतिष्ठाऽऽदौ सम्प्रदायः शरणीकार्यः ॥

यद्वा—काञ्चनरूप्यपञ्चलोहरत्नस्फटिकगण्डकीशिलाद्युत्कीर्णं वक्ष्यमाणेन प्रतिष्ठाविधिना प्रतिष्ठापितं तत्स्वास्तीर्णपट्टवसने श्रीखण्डचन्दनादिनिर्मिते पीठे निवेशयेत् ॥

[1] अयं भागः ( भ ) कोशे नास्ति.

### मन्दिरार्चा

अथ तत्र चक्रराजे मन्दिरपूजां कुर्यात् । यथा—

ऐं ह्रीं श्रीं अमृताम्भोनिधये नमः,—रत्नद्वीपाय, नानावृक्षमहोद्यानाय, कल्पवाटिकायै, सन्तानवाटिकायै, हरिचन्दनवाटिकायै, मन्दारवाटिकायै, पारिजातवाटिकायै, कदम्बवाटिकायै, पुष्परागरत्नप्राकाराय, पद्मरागरत्नप्राकाराय, गोमेदकरत्नप्राकाराय, वज्ररत्नप्राकाराय, वैडूर्यरत्नप्राकाराय, इन्द्रनीलरत्नप्राकाराय, मुक्तारत्नप्राकाराय, मरकतरत्नप्राकाराय, विद्रुमरत्नप्राकाराय, माणिक्यमण्टपाय, सहस्रस्तम्भमण्टपाय, अमृतवापिकायै, आनन्दवापिकायै, विमर्शवापिकायै, बालातपोद्गाराय, चन्द्रिकोद्गाराय, महाशृङ्गारपरिघायै, महापद्माटव्यै, चिन्तामणिमयगृहराजाय, पूर्वाम्नायमयपूर्वद्वाराय, दक्षिणाम्नायमयदक्षिणद्वाराय, पश्चिमाम्नायमयपश्चिमद्वाराय, उत्तराम्नायमयोत्तरद्वाराय, रत्नप्रदीपवलयाय, मणिमयमहासिंहासनाय, ब्रह्ममयैकमञ्चपादाय, विष्णुमयैकमञ्चपादाय, रुद्रमयैकमञ्चपादाय, ईश्वरमयैकमञ्चपादाय, सदाशिवमयैकमञ्चफलकाय, हंसतूलतूलिकायै, हंसतूलमहोपधानाय, कौसुम्भास्तरणाय, महावितानकाय,—ऐं ह्रीं श्रीं महायवनिकायै नमः ॥

इति चतुश्चत्वारिंशन्मन्दिरमन्त्रैः तत्तदखिलं भावयन् कुसुमाक्षतैरभ्यर्चयेत् । एवमेव सर्वत्र अर्चने तत्तद्भावना श्रेयसी ॥

### वर्धनीपात्रनिधानादि दीपप्रज्वालनान्तम्

ततो जलपूर्णं वर्धनीपात्रं स्ववामभागे, गन्धपुष्पाक्षतादिकां सपर्यासामग्रीं समग्रां स्वदक्षदेशे, क्षीरकलशादिकं देव्याः पश्चाद्भागे च निधाय, दीपानभितः प्रज्वालयेत् । असम्भवे तु दीपौ दीपं वा । इह च विशेषः—

घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः ।<br>सितवर्तियुतो दक्षे वामतो रक्तवर्तिकः ॥

दक्षवामभागौ देव्या एव ॥

### भूतशुद्धिः

ततो ऐं ह्रीं श्रीं मूलेन श्रीचक्रे पुष्पाञ्जलिं दत्वा, ३ क ए ई ल ह्रीं नमः इति त्रिकोणस्य स्वाग्रकोणं, ३ ह स क ह ल ह्रीं नमः इति ईशानकोणं, ३ स क ल ह्रीं नमः इति आग्नेयकोणं अभ्यर्च्य भूतशुद्धिं विदध्यात् । यथा— श्वाससमीरं पिङ्गळया नाड्या अन्तराकृष्य ३ मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेनैकीभूतं भावयित्वा इडया वायुं रेचयेत् । एवमेवोत्तरत्र शोषणादिष्वपि प्रातिस्विकं पूरकरेचने । ३ यं सङ्कोचशरीरं शोषय शोषय स्वाहेति [1]निजशरीरं शोषितं विभाव्य, ३ रं सङ्कोचशरीरं दह दह पच पच स्वाहेति प्लुष्टं भस्मीकृतं च विभाव्य, ३ वं परमशिवामृतं वर्षय वर्षय स्वाहेति तद्भस्म सहस्रारेन्दुमण्डलविगळदमृतरसेन सिक्तं च विभाव्य, ३ लं शाम्भवशरीरं उत्पादयोत्पादय स्वाहेति तद्भस्मनो दिव्यशरीरमुत्पन्नं च विभाव्य, ३ हं सः सोऽहमवतरावतर शिवपदात् जीवं सुषुम्नापथेन प्रविश मूलशृङ्गाटकमुल्लसोल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोऽहं स्वाहेति परमशिवेनैकीकृतं जीवं पुनः सुषुम्नावर्त्मना मूलाधारे स्थापितं विचिन्तयेत् । सङ्कोचशरीरं नाम पाञ्चभौतिकं परिच्छिन्नमिदमेवाङ्गम् ॥ इति भूतशुद्धिः ॥

### आत्मप्राणप्रतिष्ठा

अथ आत्मप्राणप्रतिष्ठा अनुष्ठेया । तस्याश्च तन्त्रान्तरेषु विस्तरेऽपि सूत्रकारस्य सङ्कुचितप्रयोगप्रियत्वात् ज्ञानार्णवोक्त एव तत्प्रकारो ग्राह्यः । यथा—हृदि दक्षकरतलं निधाय ३ आं सोऽहमिति त्रिः पठेत् इति ॥

### प्रत्यूहोत्सारणम्

ततः प्राग्वत् विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य,

ऐं ह्रीं श्रीं—अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

[1] सूक्ष्मशरीरं—अ, भ.

इति मन्त्रं सकृदुच्चार्य, युगपद्वामपार्ष्णिभूतलाघातत्रय–करास्फोटत्रय–क्रूरदृष्ट्यवलोकनपूर्वं तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् । तालत्रयं नाम दक्षतर्जनीमध्यमाभ्यां अधोमुखाभ्यां वामकरतले सशब्दं उपर्युपरि त्रिरभिघातः ॥

## न्यासजालविधिः

अथ नम इत्यङ्गुष्ठमन्त्रमुच्चारयन् अङ्कुशेन शिखां बद्ध्वा, श्रीदेवीरूपं भावयन् आत्मानं स्वदेहे न्यासजालात्मकं वज्रकवचं विदधीत । न्यासाश्च—

मातृकान्यासः, करशुद्धिन्यासः, आत्मरक्षान्यासः, चतुरासनन्यासः, बालाषडङ्गन्यासः, वशिन्यादिन्यासः, मूलविद्यावर्णन्यासः, षोढान्यासः, चक्रन्यासः ॥

तेषु विद्यावर्णन्यासः कादिहादिभेदेन द्विविधोऽपि तत्तदुपासकस्यैकैक एव । षोढाचक्रन्यासौ कृताकृतौ । करणे त्वभ्युदय एव । श्रीषोडश्युपासकस्य पञ्चविधो मूलवर्णन्यास इति विशेषः । न्यासानामितिकर्तव्यता न्यासप्रकरणे व्यक्तीभविष्यति ॥

## पात्रासादनम्–सामान्यार्घ्यविधिः

स्वासनस्य द्वादशाङ्गुलमितात् प्रदेशात् परतो भुवि शुचिनि स्थले स्वस्य वामतो देव्याः पुरतो गन्धाक्षतकुसुमसमर्चितेन सप्तवारं त्रिवारं वा मूलमन्त्राभिमन्त्रितेन वर्धनीपात्रगतेन शुद्धेनाम्भसा बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय पुष्पैरभ्यर्च्य चतुरस्रस्याग्नीशासुरवायुकोणेषु मध्ये पूर्वादिदिक्षु च क्रमेण—

ऐं ह्रीं श्रीं ऐं हृदयाय नमः । आग्नेये ।
३ क्लीं शिरसे स्वाहा । ईशान्ये ।
३ सौः शिखायै वषट् । नैर्ऋतौ ।
३ ऐं कवचाय हुम् । वायव्ये ।
३ क्लीं नेत्रत्रयाय वौषट् । मध्ये ।
३ सौः अस्त्राय फट् । प्रागादिचतुर्दिक्षु ॥

इति पुष्पैः षडङ्गं विन्यसेत् । अत्र पूर्वादिचतुर्दिगधिकरणकं सकृदेकमेवास्त्रं ज्ञेयम् । एवमुत्तरत्रापि । अथ तत्र मण्डले ऐं ह्रीं श्रीं अस्त्राय फडिति क्षाळितं चतुरङ्गुल-विस्तारोत्सेधं स्वर्णरूप्यताम्रादिमयं त्रिपदं चतुष्पदं षट्पदमष्टपदं[1] वा आधारं ३ अं अग्निमण्डलाय [2]दशकलाऽऽत्मने अर्घ्यपात्राधाराय नम इति निधाय अग्निमण्डलत्वेन विभावितस्य तस्य पश्चिमादिप्रादक्षिण्यक्रमेण—

ऐं ह्रीं श्रीं धूम्रार्चिषे नमः, ऊष्मायै, ज्वलिन्यै, ज्वालिन्यै, विस्फुलिङ्गिन्यै, सुश्रियै, सुरूपायै, कपिलायै, हव्यवाहायै, कव्यवाहायै नमः ॥

इति दशवह्निकलाः यादिक्षांतैः सम्पूज्य, आधारोपरि अस्त्रेण क्षाळितं शङ्खं ३ उं सूर्यमण्डलाय [3]द्वादशकलाऽऽत्मने अर्घ्यपात्राय नम इति प्रतिष्ठाप्य सूर्यमण्डलात्मकतया ध्यातस्य तस्य पूर्वोक्तक्रमेण—

ऐं ह्रीं श्रीं कं भं तपिन्यै नमः, खं बं तापिन्यै, गं फं धूम्रायै, घं पं मरीच्यै, ङं नं ज्वालिन्यै, चं धं रुच्यै, छं दं सुषुम्नायै, जं थं भोगदायै, झं तं विश्वायै, ञं णं बोधिन्यै, टं ढं धारिण्यै, ठं डं क्षमायै नमः ॥

इति द्वादशसूर्यकलाः समभ्यर्च्य, तस्मिन् शंखे ३ मं सोममण्डलाय [4]षोडशकलाऽऽत्मने अर्घ्यामृताय नम इति कर्पूरादिवासितं वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा, सोममण्डलत्वेन सञ्चिन्तिते तत्र अर्घ्यसलिले पूर्वोक्तक्रमेण—

ऐं ह्रीं श्रीं अमृतायै नमः, मानदायै, पूषायै, तुष्ट्यै, पुष्ट्यै, रत्यै, धृत्यै, शशिन्यै, चन्द्रिकायै, कान्त्यै, ज्योत्स्नायै, श्रियै, प्रीत्यै, अङ्गदायै, पूर्णायै, पूर्णामृतायै नमः ॥

इति षोडशेन्दुकलाः अकारादिविसर्गान्तैः यजेत् । ततः पूर्ववत् विदिक्षु मध्ये दिक्षु च, ३ क ए ई ल ह्रीं हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि इत्यादिरीत्या त्रितारीयुतकूटत्रयं द्विरावर्त्य पुष्पैः षडङ्गानि समर्चयेत् । श्रीषोडशाक्षर्यां तु यथास्थितेन कूटषट्केनैव । एवमुत्तरत्रापि ॥

[1] दं वृत्तं वा इत्यधिकः—न
[2] ‘ धर्मप्रद ’ इत्यधिकः—अ.
[3] ‘ अर्थप्रद ’ इत्यधिकः—अ.
[4] ‘ कामप्रद ’ इत्यधिकः—अ.

अथ अस्त्राय फडिति अस्त्रमन्त्रेण संरक्ष्य, ३ कवचाय हुमिति अवगुण्ठनमुद्रया अवगुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, मूलेन सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः आत्मानं पूजोपकरणानि चावोक्ष्य, शङ्खगतजलात् किञ्चिद्वर्धन्यां क्षिपेत् ॥ इति सामान्यार्घ्यविधिः ॥

### विशेषार्घ्यविधिः

अथ सामान्यार्घ्योदकेन तद्दक्षिणतो बिन्दुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया परिकल्प्य, बिन्दौ सानुस्वारं तुरीयस्वरमालिख्य [1]( विद्यया मध्यमभ्यर्च्य ) चतुरस्रे प्राग्वत् षडङ्गं विन्यस्य कूटत्रयेण त्रिकोणकोणानभ्यर्च्य पुरोभागादिप्रादक्षिण्येन कूटत्रयद्विरावृत्त्या षट्कोणस्य कोणाँश्च क्रमेण कुसुमादिभिः अभ्यर्चयेत् । अथ तत्र मण्डले ३ ऐं अग्निमण्डलाय [2]दशकलाऽऽत्मने अर्घ्यपात्राधाराय नम इति उक्तलक्षणमाधारमादाय, प्राग्वत् विचिन्त्य तस्मिन्नुक्तदिशासु दशकृशानुकलाः संमृश्य, तदुपरि सुवर्णरूप्यशङ्खमुक्ताशुक्तिमहाशङ्खनारिकेळाश्वत्थपलाशादिनिर्मितमुक्तविस्तारोत्सेधं त्रिकोणचतुरस्रवर्तुलाद्यन्यतमाकारं पात्रं ३ क्लीं सूर्यमण्डलाय [3]द्वादशकलाऽऽत्मने अर्घ्यपात्राय नम इति मन्त्रेण निधाय, पूर्ववत् विभाविते तत्र ३ ह्रीं ऐं महालक्ष्मि ईश्वरि परमस्वामिनि ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छ आगच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहा इति मन्त्रेण पुष्पाञ्जलिं विकीर्य, दर्शितक्रमेण द्वादशादिनेशकलाः सम्भाव्य, तत्र पात्रे सौः सोममण्डलाय [4]षोडशकलाऽऽत्मने अर्घ्यामृताय नम इति मन्त्रेण कलशगतं कस्तूरिकाऽऽद्यधिवासितं क्षीरमभिपूर्य प्राग्वत् अवमृष्टे तत्र चन्दनागरुकर्पूरकचोरकुङ्कुमरोचनाजटामांसिशिला-रसाख्याष्टगन्धपङ्कलोलितं यथासम्भवं गन्धकर्दमक्लिन्नं वा सुरभिळं कुसुमं निक्षिप्य मूलशकलान्यार्द्रकनागरादिखण्डानि च सम्मिश्र्य प्रागुक्तभङ्ग्या षोडशसोमकलाः सम्पूज्य, तत्र विशेषार्घ्यामृते स्वाग्रादिप्रादक्षिण्येन अकथादिषोडशवर्णात्मकरेखात्रयं त्रिकोणं विलिख्य, तदन्तः स्वाग्रादिकोणेषु प्रादक्षिण्येन हळक्षान् विलिख्य, बहिश्च मूलखण्डत्रयं, बिन्दौ सबिन्दुं तुरीयस्वरं, तद्वामदक्षयोः क्रमेण हं सः इति च

[1] कुण्डलितो भागः ( श्री ) कोश एव वर्तते.

[2] ‘ धर्मप्रद ’ इत्यधिकः—अ.

[3] ‘ अर्थप्रद ’ इत्यधिकः—अ.

[4] ‘ कामप्रद ’ इत्यधिकः—अ.

वर्णौ विलिख्य, ३ हं सः नम इति मन्त्रेण आराध्य, त्रिकोणस्य परितो वृत्तं निर्माय तद्बहिश्च षट्कोणं निर्माय स्वाग्रकोणादिप्रादक्षिण्येन प्रागुक्तैः षडङ्गमन्त्रैः षडङ्ग-युवतीरभिपूज्य, ३ मूलान्ते तां चिन्मयीं आनन्दलक्षणां अमृतकलशपिशितहस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहेति सुधादेवीमभ्यर्च्य, तदर्घ्यं किञ्चित् पात्रान्तरेण ३ वषडित्युद्धृत्य, पुनः ३ स्वाहेति मन्त्रेण तत्रैव अर्घ्यामृते निक्षिप्य, ३ हुं इत्यवगुण्ठ्य, ३ वौषट् इति धेनुमुद्रया अमृतीकृत्य, ३ फट् इति संरक्ष्य, ३ नम इति पुष्पं दत्वा, गालिन्या मुद्रया ३ मूलेन निरीक्ष्य, योनिमुद्रया नत्वा, मूलेन सत्रितारकेण सप्तवारमभि-मन्त्र्य, गन्धाक्षतपुष्पधूपदीपान् दत्वा, विशेषार्घ्यपृषद्भिः समुक्षितसपर्यासाधनः सर्वं विद्यामयं विधाय विशेषार्घ्यपात्रं करेण संस्पृश्य चतुर्नवत्या मन्त्रैः अभिमन्त्रयेत्। मन्त्राश्च—त्रितारी-नमःसम्पुटिताः धूम्रार्चिषे इत्याद्या मूलविद्याऽन्ताः। तत्र वह्निसूर्यसोमकला अष्टत्रिंशत् पूर्वं उक्ता एवेह ग्राह्याः। ततः—

ऐं ह्रीं श्रीं सृष्ट्यै नमः, ऋध्यै, स्मृत्यै, मेधायै, कान्त्यै, लक्ष्म्यै, द्युत्यै, स्थिरायै, स्थित्यै, सिद्ध्यै नमः ॥

इति ब्रह्मदशकलाः सम्पूज्य,

ऐं ह्रीं श्रीं जरायै नमः, पालिन्यै, शान्त्यै, ईश्वर्यै, रत्यै, कामिकायै, वरदायै, ह्लादिन्यै, प्रीत्यै, दीर्घायै नमः ॥

इति विष्णुदशकलाः सम्पूज्य,

ऐं ह्रीं श्रीं तीक्ष्णायै नमः, रौद्र्यै, भयायै, निद्रायै, तन्द्र्यै, क्षुधायै, क्रोधिन्यै, क्रियायै, उद्गार्यै, मृत्यवे नमः ॥

इति दश रुद्रकलाः सम्पूज्य,

ऐं ह्रीं श्रीं पीतायै नमः, श्वेतायै, अरुणायै, असितायै नमः ॥

इति चतस्रः ईश्वरकलाः सम्पूज्य,

ऐं ह्रीं श्रीं निवृत्त्यै नमः, प्रतिष्ठायै, विद्यायै, शान्त्यै, इन्धिकायै, दीपिकायै, रेचिकायै, मोचिकायै, परायै, सूक्ष्मायै, सूक्ष्मामृतायै, ज्ञानायै, ज्ञानामृतायै, आप्यायिन्यै, व्यापिन्यै, व्योमरूपायै नमः ॥

इति सदाशिवषोडशकलाः सम्पूज्य,—अत्र ब्रह्मविष्णुरुद्राणां प्रत्येकं दश कलाः, ईश्वरस्य चतस्रः, सदाशिवस्य षोडशेति विवेकः । आहत्य कलाः अष्टाशीतिः ॥

ऐं ह्रीं श्रीं हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ नमः ॥

ऐं ह्रीं श्रीं प्रतद्विष्णुस्तवते वीर्याय[1] मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेषु अधिक्षयंति भुवनानि विश्वा ॥ नमः

ऐं ह्रीं श्रीं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ नमः ॥

ऐं ह्रीं श्रीं तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ नमः ॥

ऐं ह्रीं श्रीं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ नमः ॥

एतेषु पञ्चमन्त्रेषु अन्त्यौ द्वौ द्विद्विऋगात्मकौ ॥

मूलविद्या च—

ऐं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं म् ॥ नमः ॥

आहत्य षट् । पूर्वमुक्ता अष्टत्रिंशत्, ततः पञ्चाशत्, ततः षट्, आहत्य मन्त्राः चतुर्नवतिः ॥

केषांचिन्मते—

[2]अखण्डैकरसानन्द[3]करे परसुधा[4]त्मनि ।
स्वच्छन्दस्फुर[5]णामत्र निधेहि कुलनायिके ॥ नमः ॥

अकुळस्थामृताकारे शुद्धज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥ नमः ॥

[1] वीर्येण इति माध्यन्दिनशाखायां पाठः. [2] एषां मंत्रत्रयाणामादौ एकैकस्मिन् एकैकं बालाबीजमनुक्रमेण विनिवेशनीयमिति बहुषु तंत्रेषु—संपादकः. [3] परे—अ, ब ३, भ. [4] त्मिके—अ. [5] णं मातः—अ.

[1]त्वद्रूपिण्यैकरस्यत्वं कृत्वा[2] ह्येतत्स्वरूपिणि ।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ॥ नमः ॥

ऐं प्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा ॥ नमः ॥

ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु हसौं स्हौः ॥ नमः ॥

इत्येतैरपि मन्त्रैः पञ्चभिरभिमन्त्रणम् । आहत्य मन्त्रपिण्डसङ्ख्या एकोनशतम् ॥

एतदर्घ्यसंशोधनम् ॥

एवमभिमन्त्रणेन ज्योतिर्मयीकृतात् विशेषार्घ्यामृतात् पात्रान्तरेण किञ्चिदुद्धृत्य तद्बिन्दुभिः त्रिवारं श्रीगुरुपादुकामन्त्रेण शिरसि श्रीगुरुं यजेत् । सन्निहिताय तु निवेदयेत् । स्वयं च—

श्रीं ह्रीं क्लीं आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि
योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ॥

इति मन्त्रेण आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात् । विशेषार्घ्यपात्रात् किञ्चित् क्षीरं [3]कारणकलशे निक्षिपेत् ॥

कलशलक्षणं श्यामारहस्ये—

[4]पञ्चाशदङ्गुलो व्यास उच्छ्रायो द्वादशाङ्गुलः ।
कलशानां प्रमाणं तु मुखमष्टाङ्गुलं स्मृतम् ॥

कलशः कांस्यजोऽपि स्यात् । स च देवतायाः पृष्ठे स्थाप्य इति । आविसर्जनं शङ्खं विशेषार्घ्यपात्रं च न चालयेत् । इदं पात्रद्वयमेव सूत्ररीत्या श्रीक्रमे नान्यत् ॥ इति विशेषार्घ्यस्थापनविधिः ॥

[1] तद्रू. [2] 'स्वार्घ्ये चित्स्वरूपिणि' इति परमानन्दतंत्रे पाठः. [3] कारणपदं ( अ, श्री ) कोशयोरेव. [4] पञ्चदशाङ्गुलो—अ.

## अन्तर्यागः

स च ज्ञानार्णवे दृष्टः । यथा—मूलाधारादाब्रह्मबिलं विलसन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेदिति । अथ हृदि श्रीचक्रं विभाव्य तत्र तामेव स्वीकृतप्रागुक्तरूपां श्रीदेवीं ध्यात्वा वक्ष्यमाणैः गन्धादिताम्बूलान्तं षडुपचारमन्त्रैः उपचर्य तां पुनस्तेजोरूपेण परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां सर्वावभासिकां स्वात्माभिन्नां परिचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशतदळकमलाद्वहन्नासापुटेन निर्गतां त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमगर्भिते अञ्जलौ समानीय ऐं ह्रीं श्रीं ह्रीं श्रीं सौः श्रीललिताया अमृतचैतन्यमूर्तिं कल्पयामि नमः इति मन्त्रमुच्चारयन् निजलीलाऽङ्गीकृतललितवपुषं विचिन्त्य—ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्लरीं ह्स्रौः ।

> महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।
> सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥[1]

इति मन्त्रेण बिन्दुपीठगतनिर्विशेषब्रह्मात्मकश्रीमत्कामेश्वराङ्के परदेवतामावाहयेत् ॥

अथ नित्याऽऽदिकमणिमाऽन्तं श्रीकामेश्वराङ्कोपवेशनं विना श्रीदेवीसमानाकृतिवेषभूषणायुधशक्तिचक्रं ओघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य मूलेन आवाहनसंस्थापनसन्निधापनसन्निरोधनसम्मुखीकरणावगुण्ठनवन्दनधेनुयोनिमुद्राः प्रदर्शयंस्तदखिलं भावयेत् ॥

अत्र—

> मेरुमन्त्रात्मकं चक्रं श्रीत्रिपस्तत्र देवताः ।
> कामेश्वरः प्रकाशात्मा श्रीविमर्शस्तदङ्कगाः ॥

[1] एह्येहि देवदेवेशि त्रिपुरे देवपूजिते ।
परामृतप्रिये शीघ्रं सान्निध्यं कुरु सिद्धिदे ॥
देवेशि भक्तिसुलभे सर्वावरणसंवृते ।
यावत्त्वां पूजयिष्यामि तावत्त्वं सुस्थिरा भव ॥

इति अधिकः 'अ' कोशे.

इत्येतद्वासनारूपं अभेदं च परस्परम् ।
ज्ञात्वा श्रीगुरुवक्त्राब्जात् कृता पूजा महाफला ॥

मेरुमन्त्रश्च चतुरस्रादिचक्रनवकविशेषणगतैः लकारादिभिः अवयवैः ज्ञातव्यः ॥

## चतुष्षष्ट्युपचारार्चनम्

अथ श्रीपरदेवतायाः चतुष्षष्ट्युपचारानाचरेत् । तेषु अशक्तानां भावनया सामान्यार्घ्योदकात् किंचित्किंचिदम्बाचरणाम्बुजे अर्पणबुद्ध्या पात्रान्तरे निक्षिपेत् । पुष्पाक्षतान्वा समर्पयेत् । [1]भूषावरोपणाभ्यङ्गरूपमुपचारद्वयमपि मण्टपान्तर एव भावनीयम्, मज्जनादिषु तथा दर्शनात्, औचित्याच्च । अनयोः मण्टपादिशब्दस्य मन्त्रावयवत्वेन प्रवेशो न सम्भवति, अनुक्तत्वात् । मज्जनमण्टपप्रवेशादिषु मध्येमार्गं पीठे च मृदुलदुकूलास्तृतिश्च भावयितुमुचितम् । श्रीचक्रादवरोहणमपि, उत्तरत्रारोहण-कथनात् । अभ्यङ्गादिषु यवनिकाभावनं च । उपचारमन्त्रशरीरं तु—अत्रादौ त्रितारी, ततश्चतुर्थ्यन्तं ललितेति पदं, अथामुकं कल्पयामि नमः इति । ललिता कामेश्वरी त्रिपुरसुन्दरी इति देवतानामपर्यायेषु सत्स्वपि सूत्रकारेण ललितापदग्रहणात् ललिता-पदप्रयोगः कार्यः । यथा—

ऐं ह्रीं श्रीं ललितायै पाद्यं कल्पयामि नमः, आभरणावरोपणं, सुगन्धतैलाभ्यङ्गं, मज्जनशालाप्रवेशनं, मज्जनमण्टपमणिपीठोपवेशनं, दिव्य-स्नानीयोद्वर्तनं, उष्णोदकस्नानं, कनककलशच्युतसकलतीर्थाभिषेकं (इह श्रीसूक्ता-दी[2]नामावृत्तिः), धौतवस्त्रपरिमार्जनं, अरुणदुकूलपरिधानं, अरुणकुचोत्तरीयं, आलेपमण्टपप्रवेशनं, आलेपमण्टपमणिपीठोपवेशनं, चन्दनागरुकुङ्कुममृगमद-कर्पूरकस्तूरीगोरोचनादिदिव्यगन्धसर्वाङ्गीणविलेपनं, केशभारस्य कालागरु-धूपं, मल्लिकामालतीजातीचम्पकाशोकशतपत्रपूगकुडळीपुन्नागकल्हारमुख्यसर्वर्तु-कुसुममालाः, भूषणमण्टपप्रवेशनं, भूषणमण्टपमणिपीठोपवेशनं, नवमणिमकुटं, चन्द्रशकलं, सीमन्तसिन्दूरं, तिलकरत्नं, कालाञ्जनं, पालीयुगळं, मणिकुण्डल-

[1] तत्तन्मन्त्रमात्रं वा जपेत् । तथाच तन्त्रसारे "चतुष्षष्ट्युपचाराणां अभावे तु मनुं जपेत् । तत्तदेव फलं विन्द्यात् साधकः स्थिरमानसः ॥" इति (भ) कोशे अधिकः.

[2] आदिपदेन देव्यथर्वशीर्षसुवर्णघर्मानुवाकादयः.

युगळं, नासाभरणं, अधरयावकं, प्रथमभूषणं ( माङ्गल्यसूत्रं ), कनकचिन्ताकं ( एतच्च आन्ध्रपुरन्ध्रीजनेन ध्रियमाणः कर्ण [ कण्ठ ] भूषणविशेषः ), पदकं, महापदकं, मुक्तावळिं, एकावळिं, छन्नवीरं ( इदं चोभयतो वैकक्ष्यदामात्मकं भूषणम् ), केयूरयुगळचतुष्टयं, वलयावळिं, ऊर्मिकावळिं, काञ्चीदाम, कटिसूत्रं, सौभाग्याभरणं ( अधश्च जघनालम्बी भूषणविशेषः ), पादकटकं, रत्ननूपुरं, पादाङ्गुलीयकं, एककरे पाशं, अन्यकरे अङ्कुशं, इतरकरे पुण्ड्रेक्षुचापं, अपरकरे पुष्पबाणान् [ तत्रोर्ध्वयोः वामदक्षयोः करयोः पाशाङ्कुशौ । अधःस्थितयोः चापबाणाः । ( पाशो वैद्रुमः अङ्कुशो रूप्यमयः ) एते च क्रमेण रागरोषमनस्तन्मात्रात्मकवासनारूपाः इति च ज्ञेयम् ], श्रीमन्माणिक्यपादुके, स्वसमानवेषाभिः आवरणदेवताभिः सह महाचक्राधिरोहणं, कामेश्वराङ्कपर्यङ्कोपवेशनं ( अत्र इतरासां निजनिजस्थानावस्थितिभावनामात्रम् ), अमृतासवचषकं, आचमनीयं, कर्पूरवीटिकां कल्पयामि नमः ॥

तल्लक्षणं तु—

एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः ।
जातीफलदळैः पूगैः लाङ्गल्यूषणनागरैः ।
चूर्णैः खादिरसारैश्च युक्ता कर्पूरवीटिका ॥

आदिपदेन ताम्बूलीदळकक्कोलग्रहणम् ।

ऐं ह्रीं श्रीं ललितायै आनन्दोल्लासविलासहासं, मङ्गळारार्तिकं कल्पयामि नमः ॥

तत्प्रकारस्तु—कलधौतादिभाजने कुङ्कुमचन्दनादिलिखितस्याष्टषट्चतुर्दळाद्यन्यतमस्य कमलस्य चन्द्राकार[1]चरुगोळकवत्यां [2]चणकमुद्गजुषि वा कर्णिकायां दळेषु च पयःशर्करापिण्डीकृतयवगोधूमादिपिष्टोपादानकानि त्रिकोणशिरस्कडमर्वाकृतीनि चतुरङ्गुलोत्सेधानि घृतपाचितानि नवसप्तपञ्चान्यतमसङ्ख्यानि दीपपात्राणि निधाय तेषु गोघृतं प्रत्येकं

[1] चारु—अ, भ.   [2] एकमुद्गजुषि—अ.

कर्षप्रमितं आपूर्य कर्पूरगर्भिता वर्तिका हृल्लेखया प्रज्वाल्य ३ श्रीं ह्रीं ग्ध्रं स्ध्रं म्ध्रं प्ध्रं न्ध्रं ह्रीं श्रीं इति नवाक्षर्या नवरत्नेश्वरीविद्यया अभिमन्त्र्य चक्रमुद्रां प्रदर्श्य मूलेनाभ्यर्च्य ३ जगद्ध्वनिमन्त्रमातः स्वाहा इति मन्त्रपूर्वकं गन्धाक्षतादिना घण्टां सम्पूज्य तां वादयन् जानुचुम्बितभूतलस्तत्पात्रं आमस्तकमुद्धृत्य, ऐं ह्रीं श्रीं ललितायै आरार्तिकं कल्पयामि नम इति कल्पयित्वा,

समस्तचक्रचक्रेशीयुते देवि नवात्मिके ।
आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये ॥

इति नववारं श्रीदेव्या आचूडं आचरणाब्जं परिभ्राम्य दक्षभागे स्थापयेत् । ततः—

ऐं ह्रीं श्रीं ललितायै छत्रं कल्पयामि नमः, चामरयुगळं, तालवृन्तं, गन्धं पुष्पं, कल्पयामि नमः ॥

विविधानि पुष्पाणि कल्पयेत् । एतत्प्रकारश्च सप्तमे अनवस्थाख्योल्लासे द्रष्टव्यः ॥

अथ धूपपात्रभरितेषु अङ्गारेषु दशाङ्गादि निक्षिप्य—

ऐं ह्रीं श्रीं ललितायै धूपं कल्पयामि नमः ॥

इति श्रीदेवीचरणान्तिके समर्प्य तत्पात्रं श्रीदेव्या वामभागे निदध्यात् । दशाङ्गानि तु—

श्वेतकृष्णागरू लाक्षा गुग्गुलुश्चन्दनं घृतम् ।
मधु बिल्वफलं राळः कर्पूरश्च दशाङ्गकम् ॥

इति वचनोक्तानि । ततो दीपभाजने अर्पितं गोघृततैलाद्यक्तं कर्पूरगर्भितं त्र्यादिविषम-सङ्ख्याकं वर्तिजातं प्रज्वाल्य,

ऐं ह्रीं श्रीं ललितायै दीपं कल्पयामि नमः ॥

इति देव्या दृक्समसीमनि प्रदर्श्य तत्पात्रं दक्षिणभागे निवेश्य,

देव्यग्रतः स्वदक्षिणे अधिचतुरस्रमण्डलं आधारोपरि निहितकनकरौप्यादि-भाजनभरितं फलविशेषखण्डसितालड्डुकादिनैवेद्यं मूलेन प्रोक्ष्य, वं इति धेनुमुद्रया अमृतीकृत्य मूलेन त्रिवारमभिमन्त्र्य,

ऐं ह्रीं श्रीं ललितायै अपोशनं कल्पयामि नमः ॥

इति नैवेद्याङ्गत्वेन अपोशनं दत्वा—

ऐं ह्रीं श्रीं ललितायै नैवेद्यं कल्पयामि नमः ॥

इति निवेदयेत् ॥

गन्धादिनैवेद्यान्तं उपचारवस्तुपञ्चकं तु पृथिव्यादिमहाभूतपञ्चकरूपं क्रमेण भावयेत् । सर्वभूतात्मकत्वं च कर्पूरवीटिकायाः ॥

अथ पानीयोत्तरापोशनहस्तप्रक्षाळनगण्डूषाचमनकर्पूरवीटिकाश्चोपचारमन्त्रैः कल्पयित्वा—ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौः ऐं सर्वसङ्क्षोभिण्यादिनवमुद्राः प्रदर्श्य, षोडश्युपासनायां तु ऐं इति त्रिखण्डामपि प्रदर्शयेत् ॥

ततो ३ मूलान्ते ललिताश्रीपादुकां पूजयामि इति तत्त्वमुद्रासन्दष्ट[1]द्वितीयशकलगृहीतविशेषार्घ्यबिन्दुसहार्पितैः दक्षकरोपात्तज्ञानमुद्राधृतकुसुमाक्षतैः श्रीदेवीं त्रिः सन्तर्पयेत् । अनेनैव प्रकारेण सर्वासामावरणदेवतानां तर्पणं ज्ञेयम् ॥ इति देवीपूजनम् ॥

## षडङ्गार्चनम्

अथ श्रीदेव्यङ्गे अग्नीशासुरवायव्यकोणेषु मध्ये दिक्षु च पूर्वोक्तविधिना मूलेन षडङ्गयुवतीः पूजयेत् ॥

## नित्यादेवीयजनम्

ततो मध्यत्रिकोणस्य दक्षिणरेखायां वारुण्याद्याग्नेयान्तं क्रमेण अं आं इं ईं उं इति, पूर्वरेखायां आग्नेयादीशानान्तं ऊं ऋं ॠं ऌं ॡं इति, उत्तररेखायां ईशानादिवारुण्यन्तं एं ऐं ओं औं अं इति, पञ्चपञ्चस्वरान् विभाव्य तेषु वामावर्तेनैव प्रागुक्तस्वरूपाः कामेश्वर्यादिनित्या यजेत् । बिन्दौ च षोडशं स्वरं अः इति विचिन्त्य महानित्याम् । यथा—

ऐं ह्रीं श्रीं अं ऐं स क ल ह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १

[1] मूलक—ब२. ब३. अ.

३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशंकरि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ इं ओं ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ईं ओं क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं [1]महावज्रेश्वरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ॠं ओं ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट् ॠं त्वरितानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ॡं ह स क ल र डैं ह स क ल र डीं ह स क ल र डौः ॡं नित्यानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताकानित्याश्रीपादुकां पूजयामि तर्पयामि नमः

[1] अत्र केषांचित्संप्रदाये महावज्रेश्वरीस्थाने महाविद्येश्वरीनित्यापूजनमुक्तं । तन्मंत्रस्तु । परि० १ मे.

३ ऐं भ म र य ऊं ऐं विजयानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १२

३ ओं स्वौं ओं सर्वमङ्गळानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १३

३ औं ओं नमो भगवति ज्वालामालिनि देवदेवि सर्वभूत-संहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र ज्वालामालिनि हुं फट् स्वाहा औं ज्वालामालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १४

३ अं च्क्रौं अं चित्रानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १५

३ अः क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं अः ललितामहानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥ १६

---

## गुरुमण्डलार्चनम्

### १. कादिविद्योपासकानाम्

ततो देव्याः पश्चात् मूलत्रिकोणपूर्वरेखायाः तदव्यवहितप्रागग्रत्रिकोणपश्चिम-रेखायाश्चान्तरे विमलाजयिन्योर्मध्ये अरुणावाग्देवतासन्निधौ दक्षिणोत्तरायतं रेखात्रयं विभाव्य दक्षिणसंस्थाक्रमेण दिव्यसिद्धमानवाख्यमोघत्रयं मुनिवेदवसुसङ्ख्यं समर्चयेत् । यथा—

#### दिव्यौघः

ऐं ह्रीं श्रीं परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ परशिवानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ पराशक्त्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ कौलेश्वरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ शुक्लादेव्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः

३ कुलेश्वरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ कामेश्वर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

सिद्धौघः

ऐं ह्रीं श्रीं भोगानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ क्लिन्नानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ समयानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ सहजानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

मानवौघः

ऐं ह्रीं श्रीं गगनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ विश्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ विमलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः

३ मदनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ भुवनानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ लीलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ स्वात्मानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ प्रियानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एतत् कादिविद्योपासकानां दक्षिणामूर्तिसम्प्रदायानुसारि गुरुपारम्पर्यम् । इदमेव षोडश्यामपीति ज्ञानार्णवमतम् । अस्मादेव ज्ञापकात् अयमेव पूजनक्रमः तत्राप्युपयुज्यते ॥

२. षोडश्युपासकानाम्

श्री विद्यार्णवनिबन्धे तु श्रीषोडशीगुरुपारम्पर्ये विशेषः । यथा—

दिव्यौघः

ऐं ह्रीं श्रीं व्योमातीताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ व्योमेश्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ व्योमगाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ व्योमचारिण्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ व्योमस्थाम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

सिद्धौघः

ऐं ह्रीं श्रीं उन्मनाकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ समनाकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ व्यापकाकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ शक्त्याकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ ध्वन्याकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ ध्वनिमात्राकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ अनाहताकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ बिन्द्वाकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ इन्द्वाकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

मानवौघः

ऐं ह्रीं श्रीं परमात्मानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ शाम्भवानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ चिन्मुद्रानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ वाग्भवानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ लीलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ सम्भ्रमानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ चिदानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ प्रसन्नानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ विश्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

## ३. हादिविद्योपासकानाम्

हादिपञ्चदश्युपासकानां गुरुक्रमो यथा—

### दिव्यौघः

ऐं ह्रीं श्रीं परमशिवानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ कामेश्वर्यम्बानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ दिव्यौघानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ महौघानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ सर्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ प्रज्ञादेव्यम्बानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ प्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

### सिद्धौघः

ऐं ह्रीं श्रीं दिव्यानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ चिदानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ कैवल्यानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ अनुदेव्यम्बानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ महोदयानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ [1]सिद्धानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

### मानवौघः

ऐं ह्रीं श्रीं चिदानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ [2]विश्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ रामानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ कमलानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ परानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

[1] अयं पर्यायः (श्री) कोश एव दृश्यते.

[2] विश्वशक्त्यानन्द—अ, ब३, भ.

३ मनोहरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ स्वात्मानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ प्रतिभानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

### मन्वादिविद्यानां गुरुपरम्परा

अथ सूत्रकृतानुक्तानामपि श्रीविद्यात्मनोपलक्षितानां मन्वादिविद्यानां गुरुपारम्पर्यं यथा—

#### दिव्यौघः

ऐं ह्रीं श्रीं परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ परविमर्शानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ कामेश्वर्यम्बानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ मोक्षानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ अमृतानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ [1]सिद्धानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ पुरुषानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ अघोरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

#### सिद्धौघः

ऐं ह्रीं श्रीं प्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ सदानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ सिद्धौघानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ उत्तमानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

#### मानवौघः

ऐं ह्रीं श्रीं उत्तरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ [2]परमानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ सर्वज्ञानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

[1] अयं पर्यायः केषुचित्कोशेषु नोपलभ्यते.
[2] 'उद्भवानन्द' इति पर्यायः अधिकः (अ) कोशे.

३ सर्वानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ [1]सिद्धानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ गोविन्दानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥
३ शङ्करानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥

कल्पसूत्रस्य काळीमतान्तर्गतत्वात् इदं पारम्पर्यत्रयं तदनुगमेव । श्रीविद्यार्णवोक्तश्रीषोडशाक्षरीगुरुपादुकापारम्पर्यस्य कादिकाळ्युभयमतसम्मतत्वं ज्ञेयम् ॥

**अज्ञातगुरुपारम्पर्याणां गुरुक्रमः**

अथ प्रासङ्गिकः अज्ञातगुरुपारम्पर्याणां गुरुक्रमो यथा—

**दिव्यौघः**

ऐं ह्रीं श्रीं ऐं गुरुभ्यो नमः ॥
३ ऐं गुरुपादुकाभ्यो नमः ॥

**सिद्धौघः**

ऐं ह्रीं श्रीं ऐं परमगुरुभ्यो नमः ॥
३ ऐं परमगुरुपादुकाभ्यो नमः ॥

**मानवौघः**

ऐं ह्रीं श्रीं ऐं आचार्येभ्यो नमः ॥
३ ऐं आचार्यपादुकाभ्यो नमः ॥
३ ऐं पूर्वसिद्धेभ्यो नमः ॥
३ ऐं पूर्वसिद्धपादुकाभ्यो नमः ॥

एवं स्वस्योपास्यविद्यौघत्रयसपर्यां विधाय स्वशिरसि पूर्वोक्तरूपं श्रीगुरुं ध्यात्वा, पूर्वोक्तेन श्रीगुरुपादुकामन्त्रेण श्रीगुरुं त्रिर्यजेत् ॥

इति गुरुमण्डलार्चनम् ॥ एतावल्लयाङ्गपूजनमित्युच्यते ॥

---

[1] 'स्वच्छानन्द' इत्यधिकः पर्यायः (अ) कोशे.

## आवरणपूजा

### प्रथमावरणम्

एतद्देवतास्वरूपं तु प्रागुक्तमेव । क्रमेण शुक्लारुणपीतवर्णरेखात्रयस्य लकारप्रकृतिक-पृथिव्यात्मकस्य चतुरस्रस्य प्रवेशरीत्या प्रथमरेखायां पश्चिमादिद्वारचतुष्टयदक्षिणभागेषु वाय्वादिकोणेषु च पश्चिमनैर्ऋतयोः पूर्वेशानयोश्च मध्ये क्रमेण—

ऐं ह्रीं श्रीं अणिमासिद्धिश्रीपादुकां पूजयामि तर्पयामि नमः, लघिमा, महिमा, ईशित्व, वशित्व, प्राकाम्य, भुक्ति, इच्छा, प्राप्ति, सर्वकामसिद्धिश्रीपादुकां पूजयामि तर्पयामि नमः ॥

इति स्वस्य तत्तदाभिमुख्यं भावयन् पूजयेत् । एवं उत्तरत्रापि । अत्र देव्याः पुरतः पश्चिमादिदिक् । पश्चिमनैर्ऋतयोर्मध्ये अधोदिक् । पूर्वेशानयोर्मध्ये चोर्ध्वदिक् इति विवेकः ॥

अथ चतुरस्रमध्यरेखायां प्रागुक्तद्वारवामभागेषु कोणेषु च क्रमेण—

ऐं ह्रीं श्रीं ब्राह्मीमातृदेवीश्रीपादुकां पूजयामि तर्पयामि नमः, माहेश्वरी, कौमारी, वैष्णवी, वाराही, माहेन्द्री, चामुण्डा, महालक्ष्मीमातृदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

ततः चतुरस्रान्त्यरेखायां प्रथमरेखोक्तक्रमेण—

ऐं ह्रीं श्रीं सर्वसङ्क्षोभिणीमुद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, सर्वविद्राविणी, सर्वाकर्षिणी, सर्ववशङ्करी, सर्वोन्मादिनी, सर्वमहाङ्कुशा, सर्वखेचरी, सर्वबीज, सर्वयोनि, सर्वत्रिखण्डमुद्राशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ॥

इति पूजयित्वा,

एताः प्रकटयोगिन्यः त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्त्विति तासामेव समष्ट्यर्चनं पुष्पाञ्जलिना कृत्वा अणिमासिद्धेः पुरतो ३ अं आं सौः त्रिपुराचक्रे-

श्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य, द्रां इति सर्वसङ्क्षोभिणीमुद्रां प्रदर्शयेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति प्रथमावरणम्

---

## द्वितीयावरणम्

श्वेतवर्णे सकारप्रकृतिकषोडशकलाऽऽत्मके चन्द्रस्वरूपे स्रवदमृतरसे षोडशदळ-कमले देव्यग्रदळमारभ्य वामावर्तेन (अप्रादक्षिण्येन)

ऐं ह्रीं श्रीं कामाकर्षिणीनित्याकळा[1]देवीश्रीपादुकां पूजयामि तर्पयामि नमः, बुद्ध्याकर्षिणी, अहङ्काराकर्षिणी, शब्दाकर्षिणी, स्पर्शाकर्षिणी, रूपाकर्षिणी, रसाकर्षिणी, गन्धाकर्षिणी, चित्ताकर्षिणी, धैर्याकर्षिणी, स्मृत्याकर्षिणी, नामाकर्षिणी, बीजाकर्षिणी, आत्माकर्षिणी, अमृताकर्षिणी, शरीराकर्षिणीनित्याकळादेवीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

इत्यभ्यर्च्य, एताः गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्त्विति तासामेव समष्ट्यर्चनं विधाय कामाकर्षिण्याः पुरतो ३ ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इत्यवमृश्य, द्रीं इति सर्वविद्राविणीमुद्रां प्रदर्शयेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

इति द्वितीयावरणम्

---

[1] 'देवी' इति (श्री) कोश एव दृश्यते.

## तृतीयावरणम्

हकारप्रकृतिकाष्टमूर्त्यात्मकशिवाभिन्ने जपाकुसु[1]मामित्रे [2]अष्टपत्रे श्रीदेव्याः पृष्ठदळमारभ्य पूर्वादिदिक्षु आग्नेयादिविदिक्षु च क्रमात्—

ऐं ह्रीं श्रीं अनङ्गकुसुमादेवीश्रीपादुकां पूजयामि तर्पयामि नमः, अनङ्ग-मेखला, अनङ्गमदना, अनङ्गमदनातुरा, अनङ्गरेखादेवी अनङ्गवेगिनी, अनङ्गाङ्कुशा, अनङ्गमालिनीदेवीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एताः गुप्ततरयोगिन्यः सर्वसङ्क्षो[3]भणचक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः संतर्पिताः सन्त्विति तासामेव समष्ट्यर्चनं विधाय अनङ्गकुसुमाया अग्रे ऐं ह्रीं श्रीं ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति संविभाव्य, क्लीं इति सर्वाकर्षिणीमुद्रां उन्मुद्रयेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ॥
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥

इति तृतीयावरणम्

---

## चतुर्थावरणम्

ईकारप्रकृतिकचतुर्दशभुवनात्मकमहामायारूपे दाडिमीप्रसूनसहोदरे चतुर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन—

ऐं ह्रीं श्रीं सर्वसङ्क्षोभिणी[4]श्रीपादुकां पूजयामि तर्पयामि नमः, सर्वविद्राविणी, सर्वाकर्षिणी, सर्वाह्लादिनी, सर्वसम्मोहिनी, सर्वस्तम्भिनी, सर्वजृम्भिणी, सर्ववशङ्करी, सर्वरञ्जिनी, सर्वोन्मादिनी, सर्वार्थसाधिनी, सर्वसम्पत्ति-पूरणी, सर्वमन्त्रमयी, सर्वद्वन्द्वक्षयङ्करीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

[1] ममित्रे—अ. माभे—भ.
[2] अष्टदळे पत्रे—अ.
[3] भणे—अ, अ१, ब२, ब३, भ.
[4] अत्रत्यपर्यायेषु 'शक्ति' इत्यधिकः—श्री.

एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः संतर्पिताः सन्त्विति तासामेव समष्ट्यर्चनं विधाय, सर्वसङ्क्षोभिण्याः पुरतः ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः । ब्लूं इति सर्ववशङ्करीमुद्रां समुन्मीलयेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम् ॥

इति चतुर्थावरणम्

---

## पञ्चमावरणम्

एकारप्रकृतिकदशावतारात्मकविष्णुस्वरूपे प्रभापराभूतसिन्दूरे बहिर्दशारे देव्यग्रकोणाद्यप्रादक्षिण्येन—

ऐं ह्रीं श्रीं सर्वसिद्धिप्रदा[1]श्रीपादुकां पूजयामि तर्पयामि नमः, सर्वसम्पत्प्रदा, सर्वप्रियङ्करी, सर्वमङ्गळकारिणी, सर्वकामप्रदा, सर्वदुःखविमोचिनी, सर्वमृत्युप्रशमनी, सर्वविघ्ननिवारिणी, सर्वाङ्गसुन्दरी, सर्वसौभाग्यदायिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः संतर्पिताः सन्त्विति तासामेव समष्ट्यर्चनं विधाय सर्वसिद्धि[2]प्रदाया धुरि ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति समभ्यर्च्य, सः इति उन्मादिनीमुद्रां उद्घाटयेत् ॥

[1] सर्वपर्यायेषु अत्र ' देवी ' इत्यधिकः—श्री.

[2] प्रदायिन्याः पुरतः—अ.

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

इति पञ्चमावरणम्

---

## षष्ठावरणम्

रेफप्रकृतिकदशकलाऽऽत्मकवैश्वानराभिन्ने जपासुमनस्सहचरे अन्तर्दशारे देव्यग्र-कोणमारभ्य वामावर्तेन—

ऐं ह्रीं श्रीं सर्वज्ञा[1]श्रीपादुकां पूजयामि तर्पयामि नमः, सर्वशक्ति, सर्वैश्वर्यप्रदा, सर्वज्ञानमयी, सर्वव्याधिविनाशिनी, सर्वाधारस्वरूपा, सर्वपापहरा, सर्वानन्दमयी, सर्वरक्षास्वरूपिणी, सर्वेप्सितफलप्रदाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एताः निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः संतर्पिताः सन्त्विति तासामेव समष्ट्यर्चनं विधाय, सर्वज्ञायाः पुरतः ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वरी-श्रीपादुकां पूजयामि तर्पयामि नमः इत्यर्चयित्वा, क्रों इति सर्वमहाङ्कुशमुद्रां [2]अङ्कुरयेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठमावरणार्चनम् ॥

इति षष्ठावरणम्

---

[1] 'देवी' इत्यधिकः—श्री.  [2] अङ्कूरयेत्—अ १.

## सप्तमावरणम्

ककारप्रकृतिकाष्टमूर्त्यात्मककामेश्वरस्वरूपे पद्मरागरुचिरे अष्टारे देव्यग्रकोणाद्य-प्रादक्षिण्येन—

ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः र्ब्लूं वशिनीवाग्देवता[1]श्रीपादुकां पूजयामि तर्पयामि नमः, कं खं गं घं ङं क्ल्हीं कामेश्वरी, चं छं जं झं ञं न्व्लीं मोदिनी, टं ठं डं ढं णं य्लूं विमला, तं थं दं धं नं ज्म्रीं अरुणा, पं फं बं भं मं ह्स्ल्व्यूं जयिनी, यं रं लं वं झ्म्र्यूं सर्वेश्वरी, शं षं सं हं ळं क्षं क्ष्म्रीं कौळिनीवाग्देवताश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एताः रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्रा इत्यादि कथितचरम् । वशिन्याः पुरतः ऐं ह्रीं श्रीं ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य ह्स्ख्फ्रें इति खेचरीमुद्रां उररीकुर्यात् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥

इति सप्तमावरणम्

---

## अष्टमावरणम्

महात्र्यस्रबाह्यतः पश्चिमादिदिक्षु प्रादक्षिण्येन—

ऐं ह्रीं श्रीं द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यो बाणेभ्यो नमः बाणशक्ति-श्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ धं सर्वसम्मोहनाय धनुषे नमः धनुश्शक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ॥

[1] 'देवी' इति पूर्ववत् अधिकः—श्री.

३ ह्रीं सर्ववशीकरणाय पाशाय नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ क्रों सर्वस्तम्भनाय अङ्कुशाय नमः अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ॥

इत्यायुधा[1]र्चनं विधाय नादप्रकृतिकगुणत्रयप्रधानत्रिशक्तिरूपरेखात्र्यात्मके बन्धूकपुष्पबन्धुकिरणे त्रिकोणे अग्रदक्षवामकोणेषु बिन्दौ च क्रमेण—

ऐं ह्रीं श्रीं मूलप्रथमखण्डं कामेश्वर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ मूलद्वितीयखण्डं वज्रेश्वर्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ मूलतृतीयखण्डं भगमालिन्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः॥

३ मूलं ललिताऽम्बाश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एताः अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे समुद्रा इत्यादि स्पष्टम् । कामेश्वर्या अग्रे ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिपुराऽम्बाचक्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः इत्यवमृश्य ३ ह्सौः इति सर्वबीजमुद्रां विनिर्दिशेत् ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥

इति अष्टमावरणम्

---

## नवमावरणम्

बिन्द्वभिन्नपरब्रह्मात्मके बिन्दुचक्रे ऐं ह्रीं श्रीं मूलं ललिताऽम्बाश्रीपादुकां पूजयामि तर्पयामि नमः इति श्रीदेवीं पूजयेत् । ततः एषा परापररहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धिः सायुधा सशक्तिः सवाहना सपरिवारा सर्वोपचारैः सम्पूजिता संतर्पिताऽस्तु इत्यभ्यर्च्य, पुनः—ऐं ह्रीं श्रीं मूलं श्रीललितामहाचक्रेश्वरी-

[1] अत्र आयुधार्चने कामेश्वरकामेश्वर्योरुभयोरप्यायुधानां पूजनं बहुषु दृष्टं । तदनुसारेणात्र परि० १ मे.

श्रीपादुकां पूजयामि तर्पयामि नमः इत्यभिपूज्य ३ ऐं इति योनिमुद्रां प्रदर्शयेत् । षोडश्युपासनायां तु ऐं इति त्रिखण्डामपि ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ॥

इति नवमावरणम्

---

इयं नवावरणी पूजा अत्यावश्यकी । चतुराम्ना[1]यदेवताऽऽदिचतुस्समयदेवताऽन्तानां सपर्याऽपि तन्त्रान्तरोक्ता क्रियमाणा श्रेयस एव ॥

अथ पुनरपि श्रीदेव्यै पूर्ववत् धूपदीपौ कल्पयित्वा सङ्क्षोभिण्यादिमुद्राः सबीजाः प्रदर्श्य, मूलेन त्रिवारं सन्तर्प्य महानैवेद्यं समर्पयेत् । यथा—श्रीदेव्यग्रे चतुरस्रमण्डलं सामान्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्यकांस्यादि-स्थालीचषकभरितं भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं सद्रव्यशुद्ध्यादिरसवद्व्यञ्जनमञ्जुळं प्राज्यकपिलाज्यं दधिदुग्धमुग्धं यथासम्भवं वा नैवेद्यं विधाय, ("स्विन्नं वामे आमं दक्षिणे निदध्यात्" इति श्यामारहस्ये दृष्टम् । सुन्दरीमहोदये तु— "देव्या वामे दीपो दक्षिणे नैवेद्यम्" इत्युक्तम्), ऐं ह्रीं श्रीं मूलेन त्रिः प्रोक्ष्य, वं इति धेनुमुद्रया अमृतीकृत्य, सप्तवारं मूलेनाभिमन्त्र्य, पूर्ववत् अपोशनं कल्पयित्वा,

हेमपात्रगतं देवि परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ॥

इति प्रार्थ्य, पूर्वोक्तनैवेद्योपचारमन्त्रेण निवेद्य, तत्तन्मुद्राविधानपूर्वकं पञ्चप्राणाहुतीः कल्पयेत् । यथा—

ऐं ह्रीं श्रीं ऐं प्राणाय स्वाहा, ३ क्लीं अपानाय स्वाहा, ३ सौः व्यानाय स्वाहा, ३ सौः उदानाय स्वाहा, ३ ऐं क्लीं सौः समानाय स्वाहा, ब्रह्मणे[2] स्वाहा ॥

[1] अत्र ग्रंथे सूचिता चतुराम्नायायाः परि० १ मे.

[2] ब्रह्मणे स्वाहेत्यनपेक्षितो भागः ।

ततः—

ऐं ह्रीं श्रीं क ए ई ल ह्रीं नमः आत्मतत्त्वव्यापिनी ललिता तृप्यतु ॥

३ ह स क ह ल ह्रीं नमः विद्यातत्त्वव्यापिनी ललिता तृप्यतु ॥

३ स क ल ह्रीं नमः शिवतत्त्वव्यापिनी ललिता तृप्यतु ॥

ऐं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं नमः

सर्वतत्त्वव्यापिनी ललिता तृप्यतु ॥

इति निमीलितनयनः क्षणमवस्थाय, श्रीदेवीं भुक्तवतीं विभाव्य, पूर्ववत् उपचारमन्त्रैः पानीयोत्तरापोशनकरप्रक्षाळनगण्डूषपाद्यादि कल्पयित्वा, भोजनपात्रं नैर्ऋत्यां निरस्य, अस्त्रेण स्थलं संशोध्य, ततः पुनः प्राग्वदाचमनीयकर्पूरवीटिकादक्षिणाकर्पूरनीराजनानि दत्वा, सुवर्णादिभाजनलिखितं कुङ्कुमपङ्करेखाऽऽत्मकं अष्टदळकमलकर्णिकास्थापितमणिमयचषकपूरितं प्रथमं प्रज्वाल्य, पुष्पाक्षतैरभ्यर्च्य, उपचारमन्त्रपूर्वकं—

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।

त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ॥

इति चतुर्दशधा नवधा त्रिधा वा परिभ्राम्य दक्षभागे स्थापयेत् ॥

### मन्त्रपुष्पम्

अथ अञ्जलौ पुष्पाण्यादाय मन्त्रपुष्पम् । यथा—

शिवे शिवसुशीतळामृततरङ्गगन्धोल्लस-

न्नवावरणदेवते नवनवामृतस्यन्दिनि ।

गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले

षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥

इत्युक्त्वा पुष्पाञ्जलिं समर्पयेत् । इत्येते कतिचिच्चतुष्षष्ट्युपचारातिरिक्ता उपचारास्तु पूर्ववत् धूपदीपेतिसूत्रगतेनादिपदेन गृह्यन्ते ॥

### कामकळाध्यानम्

अथ बिन्दुना मुखं बिन्दुद्वयेन स्तनौ सपरार्धेन योनिरिति कामकळाऽऽत्मिकां ध्यात्वा, सौः इति देवीशक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत् ॥

### होमस्य कृताकृतत्वम्

अथ होमः । स च "यद्यग्निकार्यसम्पात्तिः" इति सूत्रगतेन यदिशब्देन कृताकृतः सूचितः । तस्य च करणपक्षे तदितिकर्तव्यता होमप्रकरणे ज्ञातव्या । तत्र च महाव्याहृतिहोमादर्वागेव बलिदानम् । [1]होमाकरणपक्षे तु बलिदानमात्रम् ॥

### बलिदानविधिः

यथा—देव्या दक्षभागे सामान्योदकेन त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य, ३ ऐं व्यापकमण्डलाय नमः इति गन्धाक्षतैरभ्यर्च्य, अर्धभक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य, ३ ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा, इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैः ग्रासितं विभाव्य प्रणमेत् ॥ इति बलिदानविधिः ॥

### प्रदक्षिणाः

अजेशशक्तिगणपभास्कराणां क्रमादिमाः ।
वेदार्धचन्द्रवह्न्यद्रिसङ्ख्याः स्युः सर्वसिद्धये ॥

प्रदक्षिणनमस्कारानन्तरं जपप्रकरणे वक्ष्यमाणेन विधिना जपं निर्वर्त्य स्तुवीत—

### स्तोत्रम्

ॐ गणेशग्रहनक्षत्रयोगिनीं राशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥ १ ॥
प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥ २ ॥

[1] एतदितिकर्तव्यताविशिष्टहोमकरणाशक्तस्य लघुपक्ष उक्तो ज्ञानार्णवे—

सङ्कल्प्य परमेशानि नित्यहोमं समाचरेत् ।
मूलेन प्राणसहिता आहुतीः पञ्च होमयेत् ॥
षडाहुतीष्षडङ्गेन नित्यहोमः प्रकीर्तितः ।

इत्यधिकः ( अ १ ) कोशे.

यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥ ३ ॥

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥ ४ ॥

यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥ ५ ॥

यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥ ६ ॥

अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
[1]ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥ ७ ॥

तामीकाराक्षरोद्धारां सारात् सारां परात् पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥ ८ ॥

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क केनेति सरूपारूपभावनाम् ॥ ९ ॥

वन्दे तामहम[2]क्षय्यां [3]क्षकाराक्षररूपिणीम् ।
देवीं कुलकलो[4]ल्लासप्रोल्लसन्तीं परां शिवाम् ॥ १० ॥

वर्गानुक्रमयोगेन यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥ ११ ॥

कामपूर्णजका[5]राख्यश्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशभूतां नौमि श्रीत्रिपुरामहम् ॥ १२ ॥

इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव [6]तथ्यतः ॥

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥

[1] 'ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम्' इति पाठान्तरम्.

[2] क्षय्यक्ष—इति पाठान्तरम्. [3] मकारा॰ इति 'न'. [4] ल्लोलप्रो—इति पाठान्तरम्.

[5] राढ्य—इति पाठान्तरम्. [6] तद्यतः—इति च पाठः.

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे
त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ॥

दृशा द्राघीयस्या दरदळितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥

हे सद्रूपिणि हे चिदर्चिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसञ्जीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताऽम्ब हे परशिवे मां पाहि डिम्भं निजम् ॥

नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि [1]नमो रत्नगृहगे ।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते ॥

जय जय जगदम्ब भक्तवश्ये जय जय सान्द्रकृपावशान्तरङ्गे ।
जय जय निखिलार्थदानशौण्डे जय जय हे ललिताम्ब चित्सुखाब्धे ॥

षडङ्गदेवता नित्या दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ॥

पद्मावत्यम्बिकाऽधीनवामाङ्काय शिवात्मने ।
भासुरानन्दनाथाय मम श्रीगुरवे नमः ॥

[1] नमः सन्मणिगृहे—अ.

सुन्दर्यम्बासमाश्लेषसुखिताय नमो नमः ।
प्रकाशानन्दनाथाय गुरवे परमाय मे ॥
मिश्राम्बानयनोल्लासविश्रान्तमनसे नमः ।
आनन्दानन्दनाथाय गुरवे परमेष्ठिने ॥
यदिदं श्रीगुरुस्तोत्रं [1]स्वस्वरूपोपलक्षणम् ।
बालभावानुसारेण ममेदं हि विचेष्टितम् ।
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ॥

एवमादिभिः अन्याभिश्च यथाऽवकाशं स्तुतिभिः अखिललोकमातरमभिष्टूय, शक्तिं पूजयेत् ॥

## सुवासिन्याः पूजनम्

यथा—प्राङ्निमन्त्रितां षोडशाब्दपरत आत्रिंशद्वर्षदेशीयां सुवासिनीमभ्यक्तां गौरीरूपिणीं लक्षण्यां दीक्षितां भक्तां अन्यैरप्युक्तगुणैरलङ्कृतां कुलाष्टकपरिगणितां अलाभे चातुर्वर्ण्यान्तर्गतां परकीयां शक्तिं स्वीयां वा समानीय प्रक्षाळितपादां आसने समुपवेशयेत् । सा चेददीक्षिता तदैष शोधनविधिः । ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरायै नमः इमां शक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा । इत्यभिषेकमन्त्रपूर्वं सामान्यसलिलेन त्रिः शक्तिं प्रोक्ष्य, ३ ॐ,

शान्तिरस्तु शिवं चास्तु प्रणश्यत्वशुभं च यत् ।
यत एवागतं पापं तत्रैव प्रतिगच्छतु ॥

इत्युच्चार्य तस्याः कर्णे हृल्लेखां जपेत् । अथ तां देवीरूपां विभाव्य ऐं ह्रीं श्रीं ऐं क्लीं सौः शक्त्यै अमुकं कल्पयामि नम इति मन्त्रेण हरिद्राकुङ्कुमचन्दनपट्टवासःपुष्पधूपदीप-नैवेद्यताम्बूलानि दद्यात् । सति विभवे वसनाभरणादीनि च । ततो मूलेन वक्ष्यमाणेन समष्टिमन्त्रेण च क्रमेण श्रीदेव्यै आवरणदेवताभ्यश्च दत्तपुष्पाञ्जल्यास्तस्याः करे सोपादिममध्यममुद्राचुलुकमितक्षीरपात्रं समर्पयेत् । साऽप्युत्थाय तत्कपालमुद्रया

[1] स्वगुरोरुप—अ १.

समादाय, द्वितीयतृतीये च [1]दक्षकरेणादाय, पात्रं दक्षकरे निधाय, तत्त्वमुद्रागत-द्वितीयशकलगृहीतैः क्षीरबिन्दुभिः शिरसि [2]श्रीगुरुपादुकामनुना त्रिरिष्ट्वा, हृदि च श्रीदेवीं त्रिः सन्तर्प्य, मूलेन पुनः पात्रं वामकरे कृत्वोत्थाय, होष्यामीति श्रीगुरुज्येष्ठान्य-तारानुज्ञां प्रार्थ्य, जुहुधीति तदनुज्ञया दक्षकरेण व्यवधाय, मूलान्ते सर्वतत्त्वं शोधयामि नमः स्वाहेति मन्त्रेण सर्वतत्त्वं शोधयेत् । [3]एतस्या ऐच्छिकानि विना मन्त्रं पात्रान्तराण्यपि दद्यात् । अथ पुनः कर्ता पूर्ववत् पात्रमादाय, ऐं ह्रीं श्रीं,

अळिपात्रमिदं तुभ्यं दीयते पिशितान्वितम् ।
स्वीकृत्य सुभगे देवि यशो देहि रिपून् दह ॥

इति मन्त्रेण शक्त्यै समर्पयेत् । साऽपि तत्सावशेषं स्वीकृत्य, ऐं ह्रीं श्रीं,

वत्स तुभ्यं मया दत्तं पीतशेषं कुलामृतम् ।
त्वच्छत्रून् संहरिष्यामि तवाभीष्टं ददाम्यहम् ॥

इति मन्त्रेण प्रतिदद्यात् । साधकस्तदुररीकृत्य शक्तिं चतुष्टयेन भोजयित्वा समर्पित-ताम्बूलो यथाविधि तां पञ्चमेनापि सन्तोष्य विसृजेत् ॥ इति सुवासिनीपूजा ॥

## तत्त्वशोधनम्

अथ सन्निहिते गुरौ तं पादुकामन्त्रेणाभिपूज्य पात्राणि समर्प्य समाहूतैः शिष्यैः वृन्दात्मना अवस्थितैः सामयिकैः साकं पाणी प्रक्षाळ्य, श्रीदेव्यै मूलेनोपचारमन्त्रेण च त्रिः पुष्पाञ्जलिं समर्प्य, ३ समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलकौलनिगर्भरहस्यातिरहस्यपरा-परातिरहस्ययोगिनीश्रीपादुकाभ्यो नम इति समष्टिमन्त्रेण आवरणदेवतानां एकं पुष्पाञ्जलिं दत्वा, पूर्ववत् पात्रं पुनःपुनरादायाचमनोक्तैः मन्त्रैः तत्त्वानि शोधयेत् । यथा—

ऐं ह्रीं श्रीं क ए ई ल ह्रीं आत्मतत्त्वं शोधयामि नमः स्वाहा ॥
३ ह स क ह ल ह्रीं विद्यातत्त्वं शोधयामि नमः स्वाहा ॥
३ स क ल ह्रीं शिवतत्त्वं शोधयामि नमः स्वाहा ॥

[1] 'दक्ष' इत्येतत् 'वाम' इति शोधितम्—अ १.
[2] श्रीगुरुं पादुका—भ, श्रीगुरुपादुकां तन्मनुना—अ.
[3] अदीक्षितायास्तु बालयैव—इत्यधिकः (अ) कोशे.

षोडश्युपासकस्य तु त्रयोदशबीजपुटितैः प्रत्येकखण्डैः तत्त्वत्रयशोधनं सर्वेण मूलेन सर्वतत्त्वशोधनं च विशेषः ॥

अत्र प्रथमपात्रस्वीकार एवोत्थानम् । यथासम्प्रदायं सर्वपात्रस्वीकारोऽपि । स्त्रीणां तूत्थायैव । अत्र च बालोपास्तावेकं पात्रं सर्वतत्त्वशोधनम् । पञ्चदश्युपासनायां तु पात्रत्रयम् । श्रीषोडशाक्षर्युपास्तौ तु तच्चतुष्टयम् । निवृत्ते पूर्णाभिषेके तत्पञ्चकं, यथाऽधिकारमैच्छिकानि वा । विश्वस्तायाः कुमार्याः सुवासिन्याश्चैकं पात्रमिति विवेकः ॥

किं च श्रीगुरोस्तच्छक्तिसुतज्येष्ठकनिष्ठानां स्वज्येष्ठस्य [1]सामयिकानां स्त्रीणां चोच्छिष्टं द्रव्याद्युपादेयम् । तेभ्यस्तु न देयम् । स्वकनिष्ठशिष्ययोस्तु प्रदेयम् । वीराणां तूच्छिष्टं चर्वणमात्रमादेयम् ।

उल्लासास्तु—आरम्भतरुणयौवनप्रौढतदन्तोन्मनानवस्थाऽऽख्याः सप्त । तेष्वर्घ्यसंशोधनमारम्भः । तरुणयौवनप्रौढेषु सपर्याविधिः । ततो देवताविसर्जनम् । अवशिष्टं अवस्थात्रयं सिद्धानां वीराणां न तु साधकानां इति तत्त्वम् । इति हविःप्रतिपत्तिः ॥

## देवतोद्वासनम्

ततः सामान्योदकात् किञ्चिदादाय—

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत् सर्वं कृपया देवि गृहाणाराधनं मम ॥

इति देव्या वामहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देव्युपरि त्रिः परिभ्राम्य तज्जलं हस्ते समादाय सामयिकानात्मानं च मूलेन प्रोक्ष्य शङ्खं प्रक्षाळ्य निदध्यात् । ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

ज्ञानतोऽज्ञानतो वाऽपि यन्मयाऽऽचरितं शिवे ।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ॥

इति क्षमाप्य सर्वासामावरणदेवतानां श्रीदेव्यङ्गे विलयं विभाव्य, खेचरीं बद्ध्वोद्वास्य, तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा तत्र च मूर्तिं पञ्चधा उपचर्य पुनरात्माभिन्नसंविद्रूपेण विभावयेत् । इति विसर्जनम् ॥ ततः—

[1] सामयिकीनां—अ१, ब२, ब३.

**शान्तिस्तवः**

सम्पूजकानां परिपालकानां यतेन्द्रियाणां च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः ॥
नन्दन्तु साधककुलान्यणिमाऽऽदिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था ।
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥
शिवाद्यवनिपर्यन्तं ब्रम्हादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥

इत्यादिशान्तिश्लोकान् पठित्वा,

**विशेषार्घ्यविसर्जनम्**

विशेषार्घ्यपात्रं मूलेन आमस्तकमुद्धृत्य तत् क्षीरं पात्रान्तरेणादाय—

आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्माहमस्मि ।
योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा ॥

इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा शेषं प्रियशिष्याय दत्वा तत्पात्रमन्यानि च हविश्शेषप्रतिपत्तिपात्राणि प्रक्षाळ्य अग्नौ प्रताप्य अवस्थापयेत् ॥

अथ यथाशक्ति ब्राह्मणान् सुवासिनीश्च भोजयित्वा, स्वयमपि भुञ्जीत ॥ इति नित्यक्रमविधिः ॥

अयं च नित्यक्रमः सूतकेऽपि कर्तव्यः । अत्र वचनानि श्यामाक्रमे लिखितानि । तत्र च सकामैर्मनसा, निष्कामैर्यथोक्तमिति विशेषः । बालवृद्धस्त्रीमूढैः यथाप्रज्ञं कृता सपर्या [1]दौर्बोधीत्युच्यते ।

स्वयं सम्पाद्य सर्वाणि श्रद्धया साधनानि यः ।
पूजयेत् तत्परो देवीं स लभेताखिलं फलम् ॥

[1] दौर्बोधिन्युच्यते—अ १.

पूजनेन फलार्धं स्यादन्यदत्तैस्तु साधनैः ।
यथाकथंचिद्देव्यर्चा विधेया श्रद्धयाऽन्वितैः ॥

पक्षान्तराणि च—

अशक्तः कारयेत् पूजां दद्याद्वाऽर्चनसाधनम् ।
दानाशक्तः सपर्याऽन्तं पश्येत्तत्परमानसः ॥

इति कल्पसूत्रप्रकारः परदेवतायाः नित्यक्रमविधिः समाप्तः ।

### सङ्क्षेपार्चाविधिः

नित्यक्रमो मुख्यालाभे प्रतिनिधिनाऽपि निर्वर्त्यः । तत्र प्रथमस्य प्रतिनिधिः —तक्रं दधि वा गुडमिश्रं, ससैन्धवं पयः, क्षौद्रं गव्यं सर्पिः क्षीरं वा ताम्रपात्रगतं, तिलाः शर्करा वा सलिलमिश्राः, तैलं आरनाळं कांस्यपात्रस्थं तप्तं वा नारिकेळोदकं च । अथ द्वितीयस्य मूलकम् । तृतीयस्य तु लवणार्द्रकपिण्याकनागरगोधूमविकार-माषलशुनानि । चतुर्थं तु मुख्यमेव । पञ्चमस्यापराजितापुष्पं करवीरकुसुमं वेति । एतन्मिश्रणं तु सूत्रकारेण अनुपात्तम् । डामरे तु—

मांसानुकल्पोऽपूपः स्यान्मत्स्यस्य च कदळ्यपि ।
मैथुनस्य कळत्रे स्वे तदलाभे तु यत्नतः ॥

पाठान्तरम्—

द्वितीयस्य त्वपूपः स्यात्तृतीयस्य कदळ्यपि ।
पञ्चमस्य कळत्रे स्वे तदलाभे तु यत्नतः ॥ इति ॥

नित्यक्रमस्य प्रमादादिना अतिक्रमे मूलशतजपः प्रायश्चित्तमाम्नातम् । नित्यनैमित्तिकौ च क्रमौ सुतशिष्यादिभिरपि कारयितुं शक्येते ॥

### सङ्क्षेपार्चनानि

तानि च विस्तराशक्तानां राजवनिताऽऽदीनां राज्यक्षोभदुर्भिक्षज्वराद्यापत्सु च कर्तव्यानि । तत्र चतुर्दशाराद्यावरणषट्कसमर्चनं कुर्यादित्येकः पक्षः । ([1]क्रमो

[1] इदं वाक्यं नास्ति केषुचित्कोशेषु.

निर्वर्त्यः । ) अष्टाराद्यावृत्तित्रयसपर्येति द्वितीयः । आयुधार्चनसहितकामेश्वर्यादिचतुष्टयार्हणं तृतीय इति । पक्षान्तराणि च—

अशक्तः कारयेत् पूजां दद्याद्वाऽर्चनसाधनम् ।
दानाशक्तः सपर्याऽन्तं पश्येत्तत्परमानसः ॥ इति ॥

अनापदि तु कृतान्येतान्यनिष्टापादकानि ॥

**क्रत्वर्थनियमः**

कृष्णाष्टमीतच्चतुर्दश्यमापूर्णिमासङ्क्रान्तिसंज्ञेषु पर्वसु पञ्चसु सविशेषैः साधनैः आराधयेत् । तत्प्रकारस्तु नैमित्तिकप्रकरणे वक्ष्यते । नित्यनैमित्तिकक्रमौ च शिष्य-सुतादिभिरपि कारयितुं शक्येते ॥

श्रीललितोपासको नेक्षुखण्डं भक्षयेत् । न दिवा स्मरेद्वार्तालीम् । न जुगुप्सेत सिद्धद्रव्याणि । न कुर्यात् स्त्रीषु निष्ठुरताम् । वीरस्त्रियं न गच्छेत् । न तं हन्यात् । न तद्द्रव्यमपहरेत् । नात्मेच्छया मपञ्चकमुररीकुर्यात् । कुलभ्रष्टैः सह नासीत । न बहु प्रलपेत् । योषितं सम्भाषमाणामप्रतिसम्भाषमाणो न गच्छेत् । कुल-पुस्तकानि गोपायेत् ॥ एते क्रत्वर्थनियमाः अकरणे क्रतुवैगुण्यापादकाः साधकेन अवश्यमनुष्ठेयाः । अन्यांश्च दीक्षाक्रमोक्तान् सामयिकानामाचारान् अनुतिष्ठेत् । अनिशमात्मानं कामकळाऽऽत्मकं श्रीदेवीरूपं भावयेत् । एवं वर्तमानस्य कुलनिष्ठस्य सर्वतः कृतकृत्यता । शरीरविमोके च श्वपचगृहकाश्योर्नान्तरम् । स एव जीवन्मुक्तः सुखी विहरेदिति ॥

**श्रीचक्रलेखनोपायः**

अथ प्राक्सूचितः श्रीचक्रलेखनप्रकारः सुबोधतमो लिख्यते ॥

अत्रेयं परिभाषा—ईशानाद्याग्नेय्यन्ता वायव्यादिनैर्ऋत्यन्ता वा रेखा तिर्यग्रे-खेत्युच्यते । तस्या एवाग्रद्वयादाकृष्टे प्रतीच्यां प्राच्यां वा मेळिते च पार्श्वरेखे इत्युच्यते । रेखोपरि रेखाऽन्तरस्यारोहे तयोर्योगस्थानं सन्धिः । ईदृशः रेखात्रययोगो मर्म । साधको यदाशाऽभिमुखः सैव प्राची । तदितरा प्रतीची । प्रत्यगग्रं त्रिकोणं शक्तिः । प्रागग्रं तु शिवो वह्निश्चेत्युच्यते इति ॥

प्रथमं ईशानाद्याग्नेयान्त-तदादिवारुण्यन्त-तदादीशानान्तां रेखामभिलिख्य शक्तिं निष्पादयेत् । इदं मध्यत्रिकोणं भवति । यन्मध्यं हि बिन्दुस्थानमामनन्ति । अथास्य मध्यतः पार्श्वरेखाद्वयनिर्भेदपूर्वकं प्राग्वच्छक्त्यन्तरं कल्पयेत् । अत्र सन्धिद्वयं जायते । ततो द्वितीयशक्तिमध्यतः तत्पार्श्वरेखाद्वयं निर्भिद्य च तां प्रथमशक्त्यग्रसंलग्नां तिर्यग्रेखामालिख्य तदग्राकृष्टाभ्यां पक्षरेखाभ्यां सन्धिद्वयभेदचणं शिवत्रिकोणं कुर्यात् । एतावता अष्टकोणं सम्पद्यते । एतदेव मध्यत्रिकोणेन सह नवयोनिचक्रमिति कीर्त्यते । इह सन्धयः षट् मर्मणी द्वे च सिध्यन्ति । अथ प्राचीं तिर्यग्रेखामुभयतोऽप्यभिवर्ध्य तदग्राकृष्टाभ्यां प्रथमवह्निपक्षकोणाग्रसंलग्नाभ्यां पार्श्वरेखाभ्यां शक्तिं जनयेत् । एवं प्रतीचीं तिर्यग्रेखामुभयतोऽप्यभिवर्ध्य तदग्राकृष्टाभ्यां प्रथमशक्तिपक्षकोणाग्रस्पृष्टाभ्यां पार्श्वरेखाभ्यां शिवं साधयेत् । ततो मध्यत्रिकोणपार्श्वरेखे ऐशान्यामाग्नेय्यां चाभिवर्ध्य तदग्रयोः प्रथमलिखितवह्न्यग्रे च संसक्तां तिर्यग्रेखामालिखेत् । एवं प्रथमलिखितवह्नेरपि पार्श्वरेखे अभिवर्ध्य तदग्रयोः द्वितीयशक्त्यग्रे च संसक्तां तिर्यग्रेखां विलिखेत् । तदिदमन्तर्दशारं भवति । अत्र मर्माणि षट् सन्धयो द्वादश च निष्पद्यन्ते । अथ विद्यमानासु पञ्चसु तिर्यग्रेखासु प्रथमां चरमां च उभयतोऽप्यभिवर्ध्य तत्तदग्राकृष्टाभिः पार्श्वरेखाभिः तृतीयशक्तिपक्षकोणशिखावर्जं इतरकोणाष्टकाग्रस्पर्शिनौ शक्तिशिवौ समुत्पादयेत् । ततः प्रथमवर्धिता मध्यशक्तिप्रथमवह्निपार्श्वरेखास्तत्तद्विदिक्षु संवर्ध्य तत्तदग्राकृष्टे अन्तर्दशारीयप्राक्प्रत्यक्कोणशिखासम्पृक्ते रेखे समालिखेत् । तदेतद्बहिर्दशारं भण्यते । इह मर्माणि दश सन्धयोऽष्टादश चोन्मीलन्ति । अथ सप्तसु तिर्यग्रेखासु षष्ठद्वितीये पूर्वसंवर्धित एव रेखे उभयतः संवर्ध्य तत्तदग्राकृष्टाभिः बहिर्दशारस्य प्राक्प्रत्यक्त्रिकोणशिखरसंसर्गवर्जमितरकोणाष्टकशिखरसम्पृक्ताभिः पार्श्वरेखाभिः शक्तिं शिवं च समुन्मीलयेत् । ततश्चतुर्थशक्तिपार्श्वरेखे सर्वप्राचीनां तिर्यग्रेखां चोभयतोऽप्यभिवर्ध्य मेळयेत् । एवं तृतीयवह्निपार्श्वरेखे सर्वप्रतीच्यां तिर्यग्रेखां चोभयतस्संवर्ध्य मेलयेत् । ततः प्रथमशक्तिप्रथमशिवयोः पार्श्वरेखे द्वे तत्तद्विदिक्षु समभिवर्ध्य तत्तदग्रतश्चतुर्थशक्तितृतीयशिवशिखरचुम्बितिर्यग्रेखायुगळमालिखेत् । तदिदं चतुर्दशारं भवति । अत्र मर्माणि अष्टादश, सन्धयः चतुर्विंशतिः, शक्तयः पञ्च, वह्नयश्चत्वारः, पार्श्वयोः डमरवोऽष्टौ, त्रिकोणानि च संहत्य त्रिचत्वारिंशत् सम्पद्यन्ते । अथास्य परितः कर्णिकावृत्तं विलिख्य तत्संसक्तान्यसन्धीनि दळान्यष्टौ

कल्पयेत् । तदिदमष्टदळमिति व्यवह्रियते । असान्धित्वं नाम केसराभाववत्वम्, श्रीचक्रराजे केसरनिषेधदर्शनात् । अथ तदभितः पुनःकर्णिकावृत्तं निष्पाद्याऽसन्धीनि पत्राणि षोडश निर्मिमीत । तदिदं षोडशदळं सञ्चक्षते । अथ तद्बहिर्मर्यादावृत्तत्रयं परिकल्प्य तत्परितः चतुरस्ररेखात्रयेण चतुर्द्वारं भूपुरं समुद्भावयेत् ॥ इति श्री[1]चक्र-लेखनप्रकारः ॥

### श्रीचक्रप्रस्तारभेदाः

एतत्प्रतिष्ठापनमन्त्रः प्रागुक्त एव । सुवर्णादिनिर्मितस्य यन्त्रस्य तु द्वौ प्रस्तारौ— भौमो, भैरवश्चेति । तत्र पलद्वयपरिमाणे चतुरङ्गुलविस्तृतपट्टे उर्ध्वरेखाऽऽत्मको बिन्द्वादिभूपुरान्तरचनाक्रमो भूप्रस्तारः । भैरवप्रस्तारस्त्रिविधः । तत्र भूपुरमारभ्य चक्रत्रिकत्रिकं सृष्टिस्थितिसंहारपदैः व्यपदिश्यते । तेषु सृष्टिचक्रात् स्थितिचक्रमुन्नतम् । ततोऽपि संहारचक्रमुच्छ्रितम् । इत्येकः पक्षः । भूपुरात् पद्मद्वयमुन्नतम् । तस्मात् चतुर्दशारादिषट्कं उदग्रमिति द्वितीयः । भूपुरादिबिन्द्वन्तानि नवापि चक्राणि पूर्वपूर्वस्मादुत्तरोत्तरं उन्नतानीति तृतीयः । अत्र—

> चतुरस्रं समारभ्य नवचक्राण्यनुक्रमात् ।
> उन्नतोन्नतमामध्याच्चक्रं स्यान्निधनेधनम् ॥ इति ॥

चरमपक्षप्रतिपादके तन्त्रराजवचनगते "निधनेधनं" इति पदे "उरसिलोम" इत्यादिवत् व्यधिकरणबहुव्रीहिः । चरमे वयसि धनप्राप्तिरित्यर्थः । सम्पदनुभव-दशायामेव निधनमाप्नोति न तु तद्ध्रासकाले इति यावत् । प्राञ्चस्तु धनलाभोत्तरं निधनं भवतीति सप्तमीद्वितीययोः व्यत्ययं विधाय निन्दापरतया व्याचक्षते । तत्र मूलं त एव जानत इति दिक् ॥

### श्रीचक्रप्रतिष्ठापनविधिः

दीक्षाप्रकरणोक्ते शुभे दिवसे कृताह्निकः साधको गणपतिमाराध्य ब्राह्मणैः स्वस्ति वाचयित्वा आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य अमुकगोत्रोऽमुकशर्मवर्मादि-रहं महात्रिपुरसुन्दरीमाराधयिष्यन् श्रीचक्रराजप्रतिष्ठापनं करिष्य इति सङ्कल्प्य

[1] अत्रोपयुक्ताः प्रतिकृतयः परि० २ ये.

दुग्धदधिघृतशकृन्मूत्रात्मकं पञ्चगव्यमानीय सम्मिश्र्य हौं इति मन्त्रेण अष्टोत्तरशतवारानभिमन्त्र्य तत्र प्रणवेन यन्त्रं निक्षिप्य तत उद्धृत्य पात्रान्तरे निधाय, मिश्रितेन गोदुग्धदधिघृतमधुशर्कराऽऽत्मकेन पञ्चामृतेन संस्नाप्य धूपयेत् । अथ प्रत्येकं दुग्धादिभिः क्रमेण अन्तरान्तरा धूपनपूर्वकं स्नपयित्वा पुनर्मिश्रितैश्च तैः स्नपयेत् । ततोऽष्टासु दिक्षु शालितण्डुलपुञ्जोपरि निहितैः नूतनवसनवेष्टितैः गन्धपुष्पार्चितैः कुङ्कुमरोचनाचन्दनकस्तूरीसुरभिळशीतळसलिलपूर्णैः कुशाग्रेण स्पृष्ट्वा मूलेनाष्टोत्तरशतवारानभिमन्त्रितैः सौवर्णादिमार्त्तिकान्तान्यतमैरष्टभिः कलशैरभिषिञ्चेत् । इह सर्वमपि पञ्चगव्यादिकं स्नानं मूलमन्त्रकरणकमेव । अथ यन्त्रं धौतेन वाससा परिमृज्य पीठे निधाय कुशाग्रैः स्पृशन्—ऐं ह्रीं श्रीं ॐ यन्त्रराजाय विद्महे महायन्त्राय धीमहि । तन्नो यन्त्रः प्रचोदयात् ॥ इति—यन्त्रगायत्रीं अष्टोत्तरशतवारानावर्त्य आत्मनो भूतशुद्ध्यादिमातृकान्यासान्तं कृत्वा यन्त्रं करेण संस्पृश्य प्राणप्रतिष्ठां कुर्यात् । यथा—

अस्य श्रीयन्त्रराजप्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुस्सामाथर्वाणि छन्दांसि । चैतन्यं देवता । आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । मम श्रीचक्रप्राणप्रतिष्ठायै जपे विनियोगः ॥

ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अंगुष्ठाभ्यां नमः ॥

३ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः ॥

३ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः ॥

३ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः ॥

३ ॐ पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः ॥

३ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः करतलकरपृष्ठाभ्यां नमः ॥

एवं हृदयादिन्यासः ॥

ध्यानम्—

रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमळिगुणमप्यङ्कुशं पञ्चबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिणयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥

ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हौं हं सः श्रीचक्रस्य प्राणाः इह प्राणाः ॥

३ ॐ . . . सः श्रीचक्रस्य जीव इह स्थितः ॥

३ ॐ . . . सः श्रीचक्रस्य सर्वेन्द्रियाणि ॥

३ ॐ . . . सः श्रीचक्रस्य वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥ इति ॥

यन्त्रान्तरप्राणप्रतिष्ठायां तत्तन्नाम्नः ऊहः कार्यः । अथ तत्र श्रीक्रमोक्तेन विधिना देवीमावाह्य अभ्यर्च्य यन्त्रं कुशाग्रैः स्पृशन् मूलमष्टोत्तरं सहस्रं शतं वा वारानावर्त्य होमप्रकरणोक्तेन क्रमेण अष्टोत्तरशतमाज्याहुतीः मूलेन हुत्वा सम्पाताज्यं मध्ये मध्ये यन्त्रे अवनीय सव्यञ्जनेन अन्नेन सर्वभूतबलिं प्रदाय होमशेषं समाप्य गुरवे सुवर्णशृङ्गालङ्कृतां गां वसनाभरणानि च प्रदाय देवीमुद्वास्य कुमारीं योगिनीं ब्राह्मणांश्च भोजयेत् । इमां च यन्त्रप्रतिष्ठां गुर्वादिना वा कारयेत् ॥ इति वामकेश्वरतन्त्रीयो यन्त्रप्रतिष्ठापनविधिः ॥

### यन्त्रभेदेन अर्चनकालावधिः

सौवर्णे यावज्जीवं, रौप्ये द्वाविंशतिवत्सराः, ताम्रे द्वादश, भूर्जपत्रे लिखिते तु षट् । एतेषां उक्तकालातिक्रमे पुनः प्रतिष्ठा । स्फटिकादौ तु सकृदेव प्रतिष्ठापनं सर्वदा पुरुषपरम्परयाऽभ्यर्चनं चेति । यन्त्रस्य श्वचण्डालाद्यस्पृश्यस्पर्शाद्युपघाते पुनः प्रतिष्ठापनम् । प्रमादादिना यन्त्रे दग्धे स्फुटिते नष्टे चोराद्यपहृते वा एकदिनोपवासं अयुतमूलमन्त्रजपं तद्दशांशं होमादिकं च कृत्वा पुनर्यन्त्रान्तरं प्रतिष्ठापयेत् । लुप्तचिह्नस्फुटितार्धदग्धादींस्तु तीर्थोदके निक्षिपेत् ॥ इति ॥

### श्रीचक्रमहिमा

श्रीचक्राभिषेकोदकेन शिरःप्रोक्षणं पानं च ब्रह्माण्डोदरगतगङ्गाऽऽदितीर्थसहस्रस्नानकोटिफलदम् । श्रीचक्रदर्शिनस्तु—

सम्यक् शतक्रतून् कृत्वा यत्फलं समवाप्नुयात् ।
तत्फलं लभते कृत्वा भक्त्या श्रीचक्रदर्शनम् ॥

इति वचनादुक्तं फलं भवति । इत्यलं विस्तरेणेति शिवम् ॥

**सपर्याप्रकरणं द्वितीयं समाप्तम्**

---

## होमप्रकरणम्

तत्र पूजामण्टपस्य ईशानभागे चतुरस्रकुण्डं अथवा हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं कृत्वा, सामान्यार्घ्योदकेन प्रोक्ष्य, उदक्संस्थाः प्राचीस्तिस्रो रेखाः तदुपरि प्राक्संस्था उदीचीश्च लिखित्वा तासु रेखासु क्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्मणे नमः, यमाय, सोमाय, रुद्राय, विष्णवे, इन्द्राय नमः ॥

इति गन्धाक्षतपुष्पैरभ्यर्च्य

ऐं ह्रीं श्रीं सहस्रार्चिषे हृदयाय नमः, स्वस्तिपूर्णाय शिरसे स्वाहा, उत्तिष्ठपुरुषाय शिखायै वषट्, धूमव्यापिने कवचाय हुम्, सप्तजिह्वाय नेत्रत्रयाय वौषट्, धनुर्धराय अस्त्राय फट् ॥

इति स्वाङ्गेषु षडङ्गं न्यसेत् । तेनैव षडङ्गेन अग्नीशासुरवायव्येषु मध्ये दिक्षु च कुण्डमभ्यर्च्य तत्र अष्टकोणषट्कोणत्रिकोणात्मकमग्नि[1]चक्रं प्रवेशरीत्या विलिख्य त्रिकोणे दिगष्टकं विभाव्य तत्र स्वाग्रादिप्रादक्षिण्येन दिक्षु मध्ये च क्रमात्—

[1] अस्य प्रतिकृतिः परि० २ ये.

ऐं ह्रीं श्रीं पीतायै नमः, श्वेतायै, अरुणायै, कृष्णायै, धूम्रायै, तीव्रायै, स्फुलिङ्गिन्यै, रुचिरायै, ज्वालिन्यै नमः ॥

इति पीठशक्तीः समर्च्य, पीठमध्य एव—

ऐं ह्रीं श्रीं तं तमसे नमः, रं रजसे, सं सत्वाय, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ज्ञां ज्ञानात्मने नमः ॥

इत्युपर्युपरि पूजयेत् । ततः तत्र त्रिकोणे ऐं ह्रीं श्रीं ह्रीं वागीश्वरीवागीश्वराभ्यां नमः इति मन्त्रेण जनिष्यमाणस्य वह्नेः पितरौ वागीश्वरीवागीश्वरौ सम्पूज्य, तयोर्मिथुनीभावं भावयित्वा, अरणेः सूर्यकान्ताद्वा वह्निमुत्पाद्य द्विजगृहाद्वा आनीय मृत्पात्रे ताम्रपात्रे वा अग्निं आग्नेय्यां नैर्ऋत्यां वा दिशि निधाय, तस्मात्क्रव्यादांशमेकमग्निशकलं नैर्ऋत्यां निरस्य मूलेन निरीक्षणप्रोक्षणे अस्त्रेण कुशैः ताडनमवगुण्ठनामृतीकरणे चैत्यैतैः विशोध्य, ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहेति मूलाधारोद्गतं संविदग्निं ललाटनेत्रद्वारा निर्गमय्य तं बाह्याग्नियुक्तं वागीश्वर-बीजस्य वागीश्वरीयोन्यां प्रवेशबुद्ध्या वह्निचक्रे पातयेत् । ततः कवचाय हुं इति मन्त्रेण इन्धनैः आच्छाद्य,

ऐं ह्रीं श्रीं अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥

इत्युपस्थाय, ३ उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा इति वह्निमुत्थाप्य, ३ चित्पिङ्गळ हन हन दह दह पच पच सर्वज्ञ आज्ञापय स्वाहा इति प्रज्वाल्य, वागीश्वरीगर्भे धृतं ध्यात्वा, ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं नमः अस्य होमाग्नेः पुंसवनकर्म कल्पयामि नमः । तथा अस्य होमाग्नेः सीमन्तकर्म, जातकर्म, श्रीललिताग्निरिति नाम्ना नामकरणकर्म कल्पयामि नमः । एवं तत्तत्क्रमेषु वह्नेः तत्तद्देवतानाम योज्यम् । अस्य होमाग्नेरितिपदस्य एतावत्पर्यन्तमनुवृत्तिः, इतः परं ललिताऽग्नेरिति । ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐंः नमः श्रीललिताऽग्नेः अन्नप्राशनकर्म कल्पयामि नमः, चौळकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म कल्पयामि नमः । इति तत्तत्कर्माणि भावनया विदध्यात् । ततः सामान्यजलेन परिषेचनम्, प्रागग्रैरुदगग्रैश्च कुशैः परिस्तरणम्, त्रिभिः परिधिभिः प्राग्वर्जं परिधानं च कृत्वा,

त्रिणयनमरुणाप्ताबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिं स्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥

इति ध्यायेत् ॥

शारदातिलके—

वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।
शयानमाज्यहोमेषु निषण्णं शेषवस्तुषु ॥

इति ध्यानविशेष उक्तः । अथाष्टकोणे स्वाग्रादिप्रादक्षिण्येन—

ऐं ह्रीं श्रीं जातवेदसे नमः, सप्तजिह्वाय, हव्यवाहनाय, अश्वोदराय, वैश्वानराय, कौमारतेजसे, विश्वमुखाय, देवमुखाय नमः ॥

इति षट्कोणे च पूर्ववत् षडङ्गं अभिपूज्य, त्रिकोणे—ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा इति मन्त्रेण—अग्निमर्चयेत् । अथाज्यं मूलेन सप्तवारं अभिमन्त्रणेन संशोध्य पुरतो दर्भेषु निधाय स्रुवं च मूलेन प्रक्षाळ्य तदुत्तरतो निवेश्य अग्निं पुष्पाक्षतैः अलङ्कृत्य स्रुवेण आज्यमादाय,

ऐं ह्रीं श्रीं हिरण्यायै नमः स्वाहा । हिरण्याया इदं न मम ॥
कनकायै, रक्तायै, कृष्णायै, सुप्रभायै, अतिरक्तायै, बहुरूपायै, नमः स्वाहा । बहुरूपाया इदं न मम ।

इति अग्नेः सप्तजिह्वासु एकैकामाज्याहुतिं कुर्यात् नमोऽन्ताम् । पादुकाऽन्तानिति सूत्रं तु प्रकरणान्तरमन्त्रान्तिमनमःपदापोहकं न तु वह्निजिह्वामन्त्रनमसः, अन्यत्र विनियोगादर्शनात् । जिह्वास्थानानि तु—

रुद्रेन्द्रवह्निमांसादवरुणानिलदिग्गताः ।
हिरण्याद्याः क्रमान्मध्ये बहुरूपा व्यवस्थिता ॥ इति ॥
बहुरूपाऽऽख्यजिह्वायां होमः सर्वार्थसाधकः ।
इतरासु हुनेत् क्रूरकर्मस्वभिमतेषु च ॥ इति कादिमते ॥

ततः,

ऐं ह्रीं श्रीं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा ॥

३ ॐ उत्तिष्ठ पुरुष हरित पिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा ॥

३ ॐ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा ॥

इत्यादिभिः प्रागुक्तैः त्रिभिर्मन्त्रैः अग्नेस्तिस्र आहुतीः जुहुयात् । अथ अग्नेर्मध्य-भागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाऽऽख्यजिह्वायां आवाहनमन्त्रेण—

ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्लीं ह्स्रौः

महापद्मवनान्तःस्थे कारणानन्दविग्रहे ।

सर्वभूतहिते मातरेह्येहि परमेश्वरि ॥

इति श्रीदेवीमावाह्य उपचारमन्त्रैः गन्धादीन् पञ्चोपचारानाचर्य प्रथमं अङ्गदेवी-नित्यौघत्रयावरणदेवताचक्रेश्वरीणां एकैकामाज्याद्यन्यतमाहुतिमुद्देशत्यागपूर्वं कृत्वा अथ प्रधानदेवतायाश्च तथैव दशाहुतीर्जुहुयात् । पुरश्चरणादिहोमाहुतयस्तु इत उत्तरं कार्याः । तत्र नित्यासु चक्रेश्वरीषु अङ्गदेवीषु च तत्तन्मन्त्रान्ते चतुर्थ्यन्तं तत्तन्नामोत्तरं स्वाहापदप्रयोगः । वशिन्यादिष्वायुधेषु चोक्तमन्त्रगतं नमःशब्दमपोह्य स्वाहाशब्द-योजनम् । अवशिष्टेषु ओघत्रयाणिमाऽऽदिषु दैवतेषु चतुर्थ्यन्तं तत्तन्नामोत्तरं स्वाहापदसम्बन्धः इति विशेषः । यथा—

ऐं ह्रीं श्रीं अं ऐं स क ल ह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यायै स्वाहा । कामेश्वरीनित्याया इदं न मम ॥ इत्यादि ॥

३ अं आं सौः त्रिपुराचक्रेश्वर्यै स्वाहा । त्रिपुराचक्रेश्वर्या इदं न मम ॥ इत्यादि ॥

३ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ॐ औं अं अः ब्लूँ वशिनीवाग्देवतायै स्वाहा । वशिनीवाग्देवताया इदं न मम ॥ इत्यादि ॥

३ द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यो बाणेभ्यः स्वाहा । सर्वजम्भनेभ्यो बाणेभ्य इदं न मम ॥ इत्यादि ॥

३ हृदयदेव्यै स्वाहा । हृदयदेव्या इदं न मम ॥ इत्यादि ॥

३ परप्रकाशानन्दनाथाय स्वाहा । परप्रकाशानन्दनाथाय इदं न मम ॥ इत्यादि ॥

३ अणिमसिद्ध्यै स्वाहा । अणिमसिद्ध्या इदं न मम ॥ इत्यादिरीत्येति ॥

प्रधानदेवताहोमे तु पञ्चदशनित्योत्तरं कामेश्वर्यादित्रितयान्ते त्रिपुराम्बोत्तरं प्रधानहोमदशके तदन्ते तस्या एव महाचक्रेश्वरीत्वेन पुनर्होमे चेत्येवं त्रयोदशसु होमेषु मूलमन्त्रान्ते—ललितायै स्वाहा ललिताया इदं न मम इति विवेकः, "न तत्र मन्त्रदेवताभेदः कार्यः" इति सूत्रेण नामान्तरनिषेधात् । सर्वत्र ज्वालामालिन्यादिषु स्वाहाऽन्तेषु मन्त्रेषु तु पुनः स्वाहाशब्दान्तरयोजनं कर्तव्यमेव—

मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी ।
तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता ॥

इति शक्तिसङ्गमतन्त्रवचनात् ॥[1]

होमद्रव्याणि तु आज्यान्नपायसतिलतण्डुलतदुभयरक्तपुष्पसुगन्धिकुसुमफलाद्यन्यतमानि । अन्नादिषु त्रिमधुरयोगः केवलाज्ययोगो वा । अन्नादितिलतण्डुलान्तं निष्कामानाम् । प्रसूनं फलं चैकैकम् । लघु चेत् द्वित्र्याद्यपि । संस्कारस्तु आज्याक्त एव । एवं क्रमान्तरेष्वपि विपश्चिद्भिः ऊहनीयमिति दिक् । अथ पूर्वोक्तप्रकारेण बलिं दत्वा—

ऐं ह्रीं श्रीं ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा । अग्नये पृथिव्यै महत इदं न मम ॥

३ ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । वायवे अन्तरिक्षाय महत इदं न मम ॥

३ ॐ सुवरादित्याय च दिवे च महते च स्वाहा । आदित्याय दिवे महत इदं न मम ॥

[1] स्वाहाऽन्तमन्त्रे स्वाहाऽन्तरयोजनं नास्तीति प्राचीनानां लेखः अमूलत्वात् अनादर्तव्यः—इत्यधिकः ( भ, अ ) पुस्तकयोः.

३ ॐ भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदं न मम ॥

इति चतुर्भिः मन्त्रैः महाव्याहृतिहोमं आज्येन कृत्वा, ऐं ह्रीं श्रीं ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यत् कृतं यदुक्तं तत् सर्वं ब्रह्मार्पणं भवतु स्वाहा इति मन्त्रेण ब्रह्मार्पणाहुतिं विधाय, परब्रह्मण इदं न मम इत्युक्त्वा, परिस्तरणपरिधीनपसार्य, परिषेचनालङ्करणे कृत्वा, प्रागुक्तेन—

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥

इति मन्त्रेणोपस्थाय चिदग्निं देवतां च आत्मन्युद्वासयामि नमः इत्युद्वास्य तद्भूतितिलकं धारयेत् त्र्यायुषमिति मन्त्रेणेति शिवम् ॥

**इति होमप्रकरणं तृतीयं समाप्तम्**

---

## [1] मुद्राप्रकरणम्

### श्रीगुरुवन्दनमुद्राः

विकसितकल्प उत्तानाञ्जलिः सुमुखम् । इदमेव मुष्टीकृतं सुवृत्तम् । ऊर्ध्वाधःस्थितयोः दक्षवामकरतलयोः अंगुलीनां मिथो मणिबन्धसम्बन्धे चतुरस्रम् । अधरोत्तरस्य वामदक्षमुष्टियुगस्य स्वाभिमुख्येन योजने मुद्गरः । तिर्यङ्मिलिताग्रयोः । मध्यमयोः पश्चात् ऊर्ध्वाधःस्थिते वामदक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामकनिष्ठां दक्षिणया धृत्वा अङ्गुष्ठाग्रयोः मध्यमापुरोमध्यपर्वद्वयसम्बन्धे योनिः ॥ इति श्रीगुरुवन्दनमुद्राः ॥

[1] एतासां प्रतिकृतयः परिशिष्टे ४ थे.

## अर्घ्यस्थापनमुद्राः

अधोमुखप्रसारितं वामदक्षकरतलयुगमधरोत्तरं विधायाङ्गुष्ठद्वयचालने मत्स्यः। लक्ष्यमभितः छोटिकां दत्वा दक्षमध्यमातर्जनीभ्यां [1]अधिवामकरतलं त्रिस्ताडने अस्त्रम्। अधोमुखस्य दक्षवाममुष्टिद्वयस्य प्रसारितयोः तर्जन्योः स्वस्वभागमारभ्य क्रमेण लक्ष्यं परितः प्रादक्षिण्यवामावर्ताभ्यां परिभ्रमणे अवगुण्ठनम्। अभिमुखमन्योन्यग्रथितानां दक्षवामकराङ्गुलीनां क्रमेण कनिष्ठानामे तर्जनीमध्यमे च संयोज्य अधोमुखीकरणे धेनुः। योनिरुक्तैव। उत्तानस्य वामकरस्य विरळं आकुञ्चितैः अनामामध्यमा-तर्जन्यग्रैः अधोमुखस्य दक्षस्य वक्रीकृतानि तानि संयोज्य कनिष्ठाङ्गुष्ठाग्राणां मिथः सम्बन्धे गालिनी ॥

## अर्चने मुद्राः

विततोत्तान ऊर्ध्वाधोव्यापारितोऽञ्जलिः आवाहनी। तथाविधो न्युब्जाञ्जलिः [2]संस्थापनी। उदङ्गुष्ठयोः मुष्ट्योरभिमुखयोगे संनिधापनी। सैवाकनिष्ठामूलं अन्तःप्रविष्टाङ्गुष्ठमिथःस्पृष्टनखा संनिरोधिनी। संनिधापन्येव तिरः प्रयोजिता सम्मुखीकरणी। अवगुण्ठनी उक्तैव। उदङ्गुलिनोः करतलयोः योजने वन्दनं प्रसिद्धम्। धेनुयोनी उक्ते एव। वामानामाङ्गुष्ठयोगे तत्त्वमुद्रा। दक्षाङ्गुष्ठ-तर्जनीयोगो ज्ञानमुद्रा।

## सङ्क्षोभिण्यादिमुद्राः

उत्तानयोः करतलयोः प्रसारिततर्जनीकं संहतकनिष्ठानामामध्यमाग्राण्य-न्योन्याभिमुख्येन संयोज्य स्वस्वकनिष्ठोपर्यङ्गुष्ठाग्रसम्बन्धे सर्वसङ्क्षोभिणी। सैव प्रसारितमध्यमाऽपि सर्वविद्राविणी। इयमेव मध्यमातर्जन्योराकुञ्चने [3]सर्वाकर्षणी। परस्परग्रथिताङ्गुलिस्पृष्टनखाग्राङ्गुष्ठयोः मुष्ट्योः योगे सर्ववशङ्करी। अधरोत्तरं तिर्यक्प्रसारिते वामदक्षिणकनिष्ठे मध्यमाभ्यां धृत्वा तयोरग्रे अंगुष्ठाभ्यां निपीड्य अनामातर्जन्यग्राणां पार्श्वतो मिथः संस्पर्शे सर्वोन्मादिनी। एषैव अनामयोराकुञ्चने तर्जन्योः किञ्चित् भुग्नत्वे च सर्वमहाङ्कुशा। दक्षभुजमध्यसन्धिस्थापितवाम-

[1] अधोमुखाभ्यां वाम—श्री.

[2] संस्थापिनी—अ, अ १.

[3] सर्वाकर्षिणी—अ, ब३.

कूर्परमामणिबन्धं पाणी परिवर्त्य स्वाभिमुखमन्योन्यस्पृष्टाग्रयोः मध्यमयोः पृष्ठतोऽधरोत्तरं तिरःप्रसारितानि दक्षवामानामाकनिष्ठाग्राणि तर्जनीभ्यां धृत्वा पुरोऽङ्गुष्ठयोरन्योन्य-सम्बन्धे सर्वखेचरी । ऊर्ध्वाधस्तिरःप्रसृते वामदक्षकनिष्ठाग्रे अनामाभ्यां धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जन्यङ्गुष्ठेषु मिथः श्लिष्टाभ्यामृजुभ्यां मध्यमाभ्यां तर्जन्योः सम्बन्धे सर्वबीजम् । योनिरुक्तैव । अस्यामेव ऋजूकृतयोः कनिष्ठयोः मध्यमयो-रङ्गुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा । उदग्राणां विरळानां वामकराङ्गुलीनां ईषदाकुञ्चने ग्रासः । मध्यमातर्जन्यङ्गुष्ठयोगे प्राणमुद्रा । मध्यमानामाऽङ्गुष्ठमेळने अपानस्य । कनिष्ठाऽनामाऽङ्गुष्ठसम्बन्धे व्यानस्य । तर्जन्यनामाऽङ्गुष्ठमिश्रणे उदानस्य । सर्वाङ्गुलिसंश्लेषे समानस्य । वाममुष्टेरङ्गुष्ठाग्रचुम्बितमूलपर्वणि तर्जन्या-मीषदधोमुखप्रसृतायां नाराचः । व्यत्ययेन वामदक्षकरकनिष्ठाङ्गुष्ठाग्रयोः योगे अन्यासां वैरळ्येन प्रसारणे च चक्रम् ॥

## न्यासे मुद्राः

संहताभिः चतसृभिः अङ्गुलीभिः मुखस्पर्शे मुखम् । सम्पुटीकृतयोः करयोः मिथोऽभिमुखप्रश्लेषे करसम्पुटम् । किञ्चिदाकुञ्चिताङ्गुल्यग्रयोः स्वाभिमुखं करयोरन्योन्यसम्बन्धे अञ्जलिः । तर्जनीमध्यमानामाऽग्रैः हृदयस्पर्शे हृदयम् । मध्यमाऽनामाऽग्रयोः ब्रह्मरन्ध्रसम्बन्धे शिरः । अङ्गुष्ठाग्रचूळीयोगे शिखा । व्यत्यय-हस्तयोरधरोत्तरं वामहस्तदक्षकरयोः सर्वाङ्गुलीभिः अंससम्बन्धे कवचम् । तर्जनीमध्य-माऽनामाऽग्रैः नेत्रयुगमध्यस्पर्शे नेत्रम् । अस्त्रं उक्तचरम् । एताः षडङ्गन्यास एव । अङ्गुष्ठमिळितया अनामिकया तत्तदङ्गस्पर्शे न्यासमुद्रा । वामहस्तमुष्टिं बद्ध्वा सरळया तर्जन्या [1]अंसकर्णमभितो भ्रामणे सौभाग्यदण्डिनी । सैव गर्भिताङ्गुष्ठवामपादतलं न्यस्ता रिपुजिह्वाग्रहा । अन्त्यमिदं मुद्रायुगळं श्रीषोडशाक्षरीविषयम् ॥

## जपे मुद्रा

मुख-करसम्पुट-षडङ्गमुद्राः प्रोक्तचर्य एव । परस्परमनभिमुखग्रथिताकुञ्चिता-नामामध्यमाकनिष्ठं करौ परिवर्त्य प्रसारिततर्जनीयुगाग्रसम्बन्धे शक्त्युत्थापनी ।

[1] असंकीर्ण—श्री, अ१.

सर्वसङ्क्षोभिण्यादयो दश दर्शितचर्यः । अभिमुखाभ्यां दक्षमध्यमातर्जनीभ्यां पराङ्मुखयोः वाममध्यमातर्जन्योः अवपीड्याकर्षणेऽन्यासामङ्गुलीनां आकुञ्चने च पा श: । उदग्रायां दक्षमध्यमायां तन्मध्यपर्वस्पर्शिमध्यपर्वणस्तर्जन्याकुञ्चने अनामाकनिष्ठाग्रयोश्चाङ्गुष्ठाग्रनिंपीडने अं कु शः । उत्तानदक्षमध्यमाऽग्रेण तादृशतर्जन्यग्रपरिग्रहे चा पः । बा ण स्तु नाराचपदेनोक्तचर एव ॥

आहत्य अपुनरुक्ता मुद्राः पञ्चाशत् । एतासां प्रकारभेदोऽपि तन्त्रान्तरेषु दृश्यत इति शिवम् ॥

**इति मुद्राप्रकरणं चतुर्थं समाप्तम्**

---

## न्यासप्रकरणम्

एतन्मुद्राः मुद्राप्रकरणे उक्तपूर्वाः । तत्रादौ मातृकान्यासः—

अस्य श्रीमातृकान्यासमहामन्त्रस्य ब्रह्मणे ऋषये नमः (शिरसि), गायत्र्यै छन्दसे नमः (मुखे), श्रीमातृकासरस्वत्यै देवतायै नमः (हृदये), हल्भ्यो बीजेभ्यो नमः (गुह्ये), स्वरेभ्यः शक्तिभ्यो नमः (पादयोः), बिन्दुभ्यः कीलकेभ्यो नमः (नाभौ), मम श्रीविद्याऽङ्गत्वेन न्यासे विनियोगाय नमः (करसम्पुटे)। सर्वमातृकया त्रिर्व्यापकं सर्वाङ्गे अञ्जलिना ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः अं कं खं गं घं ङं आं अंगुष्ठाभ्यां नमः । हृदयाय नमः ॥

६ इं चं छं जं झं ञं ईं तर्जनीभ्यां नमः । शिरसे स्वाहा ॥

६ उं टं ठं डं ढं णं ऊं मध्यमाभ्यां नमः । शिखायै वषट् ॥

६ एं तं थं दं धं नं ऐं अनामिकाभ्यां नमः । कवचाय हुं ॥

६ ओं पं फं बं भं मं औं कनिष्ठिकाभ्यां नमः । नेत्रत्रयाय वौषट् ॥

६ अं यं रं लं वं शं षं सं हं ळं क्षं अः करतलकरपृष्ठाभ्यां नमः ॥ अस्त्राय फट् ॥

ध्यानम्—

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-
[1]देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।
अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणामब्जसंस्था-
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥

दक्षोर्ध्वकरमारभ्य दक्षाधःकरपर्यन्तं प्रादक्षिण्येन आयुधस्थितिः । चिन्तालिखितं नाम पुस्तकम् । इति ध्यात्वा मनसा पुष्पाञ्जलिं दत्वा, मातृकाः त्रितारीबालापूर्विकाः स्वाङ्गेषु न्यसेत् । यथा—

ऐं ह्रीं श्रीं ऐं क्लीं सौः अं नमः शिरसि, आं नमः मुखवृत्ते, इं नमः दक्षनेत्रे, ईं नमः वामनेत्रे, उं नमः दक्षकर्णे, ऊं नमः वामकर्णे, ऋं नमः दक्षनासापुटे, ॠं नमः वामनासापुटे, ऌं नमः दक्षगण्डे, ॡं नमः वामगण्डे, एं नमः ऊर्ध्वोष्ठे, ऐं नमः अधरोष्ठे, ओं नमः ऊर्ध्वदन्तपङ्क्तौ, औं नमः अधोदन्तपङ्क्तौ, अं नमः शिरसि मुखान्ततः जिह्वाग्रे, अः नमः मुखान्ते कण्ठे, कं नमः दक्षबाहुमूले, खं नमः तन्मध्यसन्धौ दक्षकूर्परे, गं नमः तन्मणिबन्धे, घं नमः तदङ्गुलीमूले, ङं नमः तदङ्गुल्यग्रे, चं नमः वामबाहुमूले, छं नमः तन्मध्यसन्धौ, जं नमः तन्मणिबन्धे, झं नमः तदङ्गुलिमूले, ञं नमः तदङ्गुल्यग्रे, टं नमः दक्षोरुमूले, ठं नमः तज्जानुनि, डं नमः तज्जङ्घापादसंधौ तद्गुल्फे, ढं नमः तदङ्गुलिमूले, णं नमः तदङ्गुल्यग्रे, तं नमः वामोरुमूले, थं नमः तज्जानुनि, दं नमः तज्जङ्घापादसंधौ तद्गुल्फे, धं नमः तदङ्गुलिमूले, नं नमः तदङ्गुल्यग्रे, पं नमः दक्षपार्श्वे, फं नमः वामपार्श्वे, बं नमः पृष्ठे, भं नमः नाभौ, मं नमः जठरे, यं नमः हृदि, रं नमः दक्षकक्षे, दक्षस्कन्धे, लं नमः अपरगले, गलपृष्ठे, ककुदि, वं नमः वामकक्षे, वामस्कन्धे, शं नमः हृदयादिदक्षकराङ्गुल्यन्तं, षं नमः हृदयादिवामकराङ्गुल्यन्तं, सं नमः हृदयादिदक्षपादाङ्गुल्यन्तं, हं नमः हृदयादिवामपादाङ्गुल्यन्तं, ळं नमः

[1] देहां—अ.

हृदयादिगुह्यान्तं ( नित्याषोडशिकार्णवे कव्यादिपादाङ्गुल्यन्तं ), क्षं नमः हृदयादिमूर्धान्तं ( नित्याषोडशिकार्णवे कव्यादिब्रह्मरन्ध्रान्तम् ) ॥

अत्र मातृकाणां बिन्दुमत्त्वं—वाग्देवताऽष्टकन्यासस्थान् सबिन्दूनचः सर्वत्र वर्णाणां बिन्दुयोग इति ज्ञापकात्—सिद्धम् ॥

इति मातृकान्यासः । अयमेक एव सूत्रोक्तः ॥

### करशुद्धिन्यासः

ऐं ह्रीं श्रीं अं मध्यमाभ्यां नमः, आं अनामिकाभ्यां, सौः कनिष्ठिकाभ्यां, अं अङ्गुष्ठाभ्यां, आं तर्जनीभ्यां, सौः करतलकरपृष्ठाभ्यां नमः ॥

### आत्मरक्षान्यासः

ऐं ह्रीं श्रीं ऐं क्लीं सौः महात्रिपुरसुन्दरि आत्मानं रक्ष रक्ष, इति हृदये अञ्जलिं दद्यात् ॥

### चतुरासनन्यासः

ऐं ह्रीं श्रीं ह्रीं क्लीं सौः देव्यात्मासनाय नमः । इति स्वस्य मूलाधारे न्यस्य ॥

३ ह्सैं ह्क्लीं ह्सौः श्रीचक्रासनाय नमः ।

३ ह्सैं, ह्स्क्लीं ह्स्सौः सर्वमन्त्रासनाय नमः ।

३ ह्रीं क्लीं ब्लें साध्यसिद्धासनाय नमः ।

इति त्रिभिः मन्त्रैः मुहुर्मुहुः पुष्पक्षेपेण चक्रमन्त्रदेवताऽऽसनानि श्रीचक्रे न्यसेत् ॥

### बालाषडङ्गन्यासः

ऐं ह्रीं श्रीं ऐं हृदयाय नमः, क्लीं शिरसे स्वाहा, सौः शिखायै वषट्, ऐं कवचाय हुम्, क्लीं नेत्रत्रयाय वौषट्, सौः अस्त्राय फट् ॥

### वशिन्यादिन्यासः

ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः र्ब्लूं वशिनीवाग्देवतायै नमः । शिरसि ॥

३ कं खं गं घं ङं क्लह्रीं कामेश्वरीवाग्देवतायै नमः । ललाटे ॥

३ चं छं जं झं ञं न्व्लीं मोदिनीवाग्देवतायै नमः । भ्रूमध्ये ॥

३ टं ठं डं ढं णं य्लूं विमलावाग्देवतायै नमः । कण्ठे ॥

३ तं थं दं धं नं ज्म्रीं अरुणावाग्देवतायै नमः । हृदि ॥

३ पं फं बं भं मं ह्स्ल्व्यूं जयिनीवाग्देवतायै नमः । नाभौ ॥

३ यं रं लं वं झ्म्र्यूं सर्वेश्वरीवाग्देवतायै नमः । लिङ्गे ॥

३ शं षं सं हं ळं क्षं क्ष्म्रीं कौळिनीवाग्देवतायै नमः मूलाधारे ॥

इति न्यसेत् ॥

### मूलविद्यावर्णन्यासः

अस्य च ऋष्यादिन्यासस्तु कृताकृतः । करणे तु तत्प्रकारो जपप्रकरणे द्रष्टव्यः ॥

ऐं ह्रीं श्रीं कं नमः शिरसि, एं नमः मूलाधारे, ईं नमः हृदि, लं नमः दक्षनेत्रे, ह्रीं नमः वामनेत्रे, हं नमः भ्रूमध्ये, सं नमः दक्षश्रोत्रे, कं नमः वामश्रोत्रे, हं नमः मुखे, लं नमः दक्षभुजे, ह्रीं नमः वामभुजे, सं नमः पृष्ठे, कं नमः दक्षजानुनि, लं नमः वामजानुनि, ह्रीं नमः नाभौ ॥

इति कादिपञ्चदशीवर्णन्यासः । एवमेव हादिपञ्चदश्यपि ॥

### श्रीषोडशाक्षरीन्यासः

ॐ ऐं ह्रीं श्रीं मूलविद्या नम इति दक्षमध्यमानामाभ्यां शिरसि न्यसेत् । अथ तत्र तां दीपाभां स्रवत्सुधारसां महासौभाग्यदां ध्यात्वा, पुनस्तथैव तामुच्चार्य महासौभाग्यं मे देहि परसौभाग्यं दण्डयामीति सौभाग्यदण्डिन्या मुद्रया वामकर्णांस-वेष्टनपूर्वकं आमस्तकचरणं वामाङ्गे न्यसेत् । पुनस्तथैव तामुच्चार्य मम शत्रून्

निगृह्णामीति रिपुजिह्वाग्रया मुद्रया वामपादाधो न्यसेत् । पुनस्तथैव तामुच्चार्य त्रैलोक्यस्याहं कर्तीति त्रिखण्डां फाले न्यसेत् । पुनस्तथैव तां उच्चार्य वदने वेष्टनत्वेन न्यसेत् । पुनस्तथैव तां उच्चार्य दक्षकर्णादिवामकर्णान्तं मुखवेष्टनत्वेन न्यसेत् ॥ पुनस्तथैव तामुच्चार्य गळोर्ध्वमाशिरो न्यसेत् । पुनस्तथैव तामाद्यन्तप्रणवमुच्चार्य मस्तकात् पादपर्यन्तं पादादामस्तकं च न्यसेत् । पुनस्तथैव तामुच्चार्य योनिमुद्रया मुखे न्यस्य, पुनस्तथैव तामुच्चार्य योनिमुद्रया ललाटे न्यसेत् ॥

### सम्मोहनन्यासः

ततः श्रीविद्यां स्मृत्वा तत्प्रभया जगदरुणं विभावयन् अनामिकां ऊर्ध्वं परिभ्राम्य, उच्चार्य मुहुर्मुहुः मूलविद्यां ब्रह्मरन्ध्रे मणिबन्धद्वितये फाले च विन्यसेत् ॥ एष सम्मोहनो नाम न्यासोऽन्वर्थः ॥

### संहारन्यासः

अथ चतुस्तारीनमस्सम्पुटितान् मूलविद्याषोडशार्णान् क्रमेण पादयोः जङ्घयोः जान्वोः कटिभागद्वये पृष्ठे लिङ्गे नाभौ पार्श्वयोः स्तनयोः अंसयोः कर्णयोः मूर्ध्नि मुखे नेत्रयोः कर्णयुगसन्निधौ कर्णवेष्टनयोश्च न्यसेत् । अत्र कूटत्रयस्य वर्णत्रयत्वेन षोडशार्णत्वव्यपदेशः । पादादिषु प्रथमं दक्षः ततो वाम इति बोध्यम् ॥

### सृष्टिन्यासः

पुनस्तथैव विद्याऽर्णान् क्रमेण ब्रह्मरन्ध्रे फाले दृशोः कर्णयोः घ्राणपुटयोः गण्डयोः दन्तपङ्क्त्योः ऊर्ध्वाधरोष्ठयोः जिह्वायां चोरकूपे पृष्ठे सर्वाङ्गे हृदि स्तनयोरुदरे लिङ्गे च न्यस्य मूलेन व्यापकं कुर्यात् ॥

### स्थितिन्यासः

अथ पूर्वक्रमेणैव अङ्गुष्ठादिकनिष्ठान्तकराङ्गुलिषु मूर्ध्नि मुखे हृदि नाभेः पादद्वयावधि कण्ठादानाभि मूर्ध्नं आकण्ठं पूर्ववत् पादाङ्गुलिषु च न्यसेत् । अत्र दक्षवामकरचरणाङ्गुलिषु द्वयोर्द्वयोरेकैकमक्षरम् ॥

एते पञ्चैव ज्ञानार्णवमते । तन्त्रान्तरेषु तु अन्येऽपि पञ्च उपलभ्यन्ते ॥

## लघुषोढान्यासः

अस्य श्रीलघुषोढान्यासस्य दक्षिणामूर्तये ऋषये नमः—शिरसि । गायत्र्यै छन्दसे नमः—मुखे । गणेशग्रहनक्षत्रयोगिनीराशिपीठरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः—इति हृदि । श्रीविद्याऽङ्गत्वेन न्यासे विनियोगाय नमः—इति करसम्पुटे ॥

ऐं ह्रीं श्रीं अं कं खं गं घं ङं आं ऐं अङ्गुष्ठाभ्यां नमः ॥

३ इं चं छं जं झं ञं ईं क्लीं तर्जनीभ्यां नमः ॥

३ उं टं ठं डं ढं णं ऊं सौः मध्यमाभ्यां नमः ॥

३ एं तं थं दं धं नं ऐं ऐं अनामिकाभ्यां नमः ॥

३ ओं पं फं बं भं मं औं क्लीं कनिष्ठिकाभ्यां नमः ॥

३ अं यं रं लं वं शं षं सं हं ळं क्षं अः सौः करतलकरपृष्ठाभ्यां नमः ॥

एवं हृदयादिन्यासः । ध्यानम्—

उद्यत्सूर्यसहस्राभां पीनोन्नतपयोधराम् ।
रक्तमाल्याम्बरालेपां [1]रक्तभूषणभूषिताम् ॥
पाशाङ्कुशधनुर्बाणभास्वत्पाणिचतुष्टयाम् ।
लसन्नेत्रत्रयां स्वर्णमुकुटोद्भासिमस्तकाम् ॥
गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं पीठमयीं ध्यायेन्मातृकां सुन्दरीं पराम् ॥

आयुधक्रमस्तु सपर्याप्रकरण एवोक्त इहानुसन्धेयः । इति श्रीदेवीं समष्टिरूपेण ध्यात्वा, गणेशादिव्यष्टिरूपेण च ध्यायेत् ॥

## गणेशन्यासः

तरुणादित्यसङ्काशान् गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिकरान् शक्तिसमन्वितान् ॥

[1] रत्न—अ. श्री.

साम्राज्याय । मुष्टिमितैः लाजैः कन्यायै । नन्द्यावर्तैः कवित्वाय । [1]वञ्जुळमल्लिकाजातीपुन्नागैः भाग्याय । बन्धूकजपाकिंशुकमधूकैः ऐश्वर्याय । कदम्बैः वश्याय । लवणैः शुक्तिप्रमाणैः आकर्षणाय । शालितण्डुलैः अर्धमुष्टिमितैः धान्याय । कुङ्कुमगोरोचनादिभिः गुञ्जामितैः सौभाग्याय । पलाशपुष्पैः तेजसे कपिलाघृतेन चोक्तमानेन । धुत्तूरकुसुमैरुन्मादाय । [2]विषवृक्षनिम्बश्लेष्मातकविभीतकसमिद्भिः दशाङ्गुलप्रमाणाभिः शत्रुनाशाय । निम्बतैलाक्तैः [3]लवणैः उक्तमानैः मारणाय । काकोलूकपक्षैर्णैकैकेन विद्वेषणाय । तिलतैलाक्तैः मरीचैः विंशत्या कासश्वासप्रशमनाय इति । पुष्पेषु स्थूलमेकैकं, अल्पानि द्वित्राणि इति वा विवेकः । एतानि द्रव्याणि काम्यजपाङ्गेषु होमेषु तत्तज्जपदशांशसङ्ख्याकानि । प्राधान्येन होमे तु सङ्ख्याऽनुक्तौ सहस्रसङ्ख्याकानि । इह च प्रथमं अभीष्टदेवतायै विज्ञाप्य अमुककर्मसिद्ध्यर्थं एतावदाहुतीः करिष्यामीति सङ्कल्पयेत् । कर्षस्तु दशगुञ्जामितमाषषोडशकप्रमाणः । शुक्तिः कर्षद्वयम् । मुष्टिस्तु पलम् ॥

## पुरश्चरणकाले विहितानि

मनःस्थैर्यशौचमौनमन्त्रार्थचिन्तननिर्वेदश्रद्धोत्साहक्रोधाभावसन्तोषेन्द्रियनिग्रहब्रह्मचर्यगुरुप्रणतिसुगन्धामलकस्नानसुवसनसुरभिळानुलेपनमध्यपत्रवर्जपलाशपत्रावलिमितैकवारभोजनप्रक्षाळितदर्भास्तीर्णधौतवस्त्रशयनत्रिषवणस्नानादीनि । अशक्तौ तु प्रातःस्नानमात्रम् ॥

## निषिद्धानि

अप्रियानृतभाषणकरञ्जविभीतकार्कस्नुहिच्छायाक्रमणप्रतिग्रहादीक्षितस्त्रीशूद्रपतितनास्तिकसंभाषणबह्वेकमलिनवस्त्रधारणकाम्यकर्माविहितकर्मकांस्यभोजनासत्सङ्गोष्णजलस्नानकञ्चुकोष्णीषधारणप्राणिहिंसापादुकायानशय्याऽऽरोहणनग्नत्वकुशरहितकरत्वादीनि अतिभोजनं च ॥

## भोज्यानि

शुक्लैकविधान्नं हैमन्तनीवारकङ्गुषष्टिका यवाः शूद्रानवहताः गुडवर्जितमैक्षवं कृष्णतिलमुद्गकलायकन्दविशेषनारिकेळकदळीलवलीपनसाम्रामलकार्द्रकसामुद्रलवणानुद्धृतसारगव्यपिप्पलीजीरकनारङ्गादीनि ॥

[1] वकुल—अ. [2] तिलतैलाक्तैः इत्यधिकः—अ. [3] भक्तल—अ.

### अभोज्यानि

गुडकृत्रिमलवणपर्युषितनिस्स्नेहकीटादिदूषितकाञ्जिकगृञ्जनबिल्वकरञ्जलशुनमृणाळकोद्रवतैलपक्वमाषमसूरचणकगोधूमदेवधान्यादीनि ॥

### भोजनपर्यायः

स्वेष्टदेवतायै निवेदितं सव्यञ्जनमन्नं मूलेन प्रोक्ष्य सप्तवारं प्रतिद्रव्यमभिमन्त्र्य अश्नीयात् । उदकं द्वात्रिंशद्वारं मूलाभिमन्त्रितं पिबेत् ॥

जपादिसमय आवश्यकोपाधौ शुचौ देशे तं निवर्त्य स्नात्वा शेषं समापयेत् । अशक्तौ तु मन्त्रभस्मान्यतरस्नानवस्त्रपरिवर्तने केवलं कुर्यादिति ॥

इत्थं कृतपुरश्चरणः सिद्धमनुः देवताप्रसादसम्पन्नः स्वातन्त्र्येणोपास्तौ श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः सति कामे काम्यमनुतिष्ठन् पूर्णमनोरथः सुखी विहरेदिति शिवम् ॥

इति श्रीभासुरानन्दनाथचरणारविन्दमिळिन्दायमानमानसेनोमानन्दनाथेन निर्मिते अभिनवे कल्पसूत्रानुसारिणि नित्योत्सवनिबन्धे श्यामाक्रमनिरूपणं नाम प्रौढोल्लासश्चतुर्थः समाप्तः ॥

---

## तदन्तोल्लासः पञ्चमः—दण्डिनीक्रमः

### उपोद्घातः

नत्वा श्रीभासुरानन्दनाथपादाम्बुजद्वयम् ।
तनोत्युमानन्दनाथः तदन्तोल्लासमद्भुतम् ॥
अत्र संविन्महाराज्ञीदण्डनाथाक्रमः स्मृतः ।
दुष्टनिग्रहशिष्टानुग्रहौ यस्या वशंवदौ ॥
प्रसाद्य सचिवेशानीं पञ्चमीक्रममाचरेत् ।
वाग्ग्लौमुपक्रमा यत्र सर्वाङ्गमनवो मताः ॥
दीक्षाविधिरिहापेक्ष्यः आरम्भोल्लास ईक्ष्यताम् ।
सन्ध्या तु तान्त्रिकी न स्यात् सूत्रकारैरसूत्रणात् ॥
निशीथे किं तु कुर्वीत बालया प्रातराह्निकम् ।
तस्याः खल्विष्टमन्त्वात् प्रागुपदेष्टव्यता यतः ॥

### काल्यकृत्यं आह्निकं च

साधकस्तावन्निशीथे प्रबुद्धः श्रीक्रमोक्तेन क्रमेण श्रीगुरुध्यानादिप्राणायामान्तं विधिं विदध्यात् । तत्र च श्रीगुरुपादुकायां [1]आदौ त्रितारीस्थाने वाक् ग्लौं इति बीजद्वयं योज्यम् । ततो हृदयपरमाकाशे स्फुरतः अखण्डानन्ददायिनः परसंवित्परिणतेः अनाहतस्य नादस्य अनुसन्धानेन भस्मितनिखिलकल्मषो मूलं मनसा दशवारमावर्त्य उत्थाय निर्वर्तितावश्यको गृह एव वारुण-मान्त्र-भास्मनस्नानेष्वन्यतमं कुर्यात् । वारुणे मूलेन त्रिरुदकाञ्जलिदानं शिरसि, त्रिराचमनं, त्रिः प्रोक्षणं च विदध्यात् ।

[1]इह ललिताङ्गत्वेन वाराह्या निशीथोपास्तावाह्निकं दिवा सपर्या चानुष्ठेयैव । इत्यधिकः—श्री, अ १.

मान्त्रभास्मनस्नाने स्मृत्युक्ते एव । अथ वाससी धौते परिधाय विधृतपुण्ड्रः मूलेन त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसे नाभिं हृदयं शिरश्चावमृशेत् ॥

## यागमन्दिरप्रवेशः

एवं त्रिराचम्य यागमन्दिरमासाद्य गोमयेनोपलिप्तद्वारस्थण्डिलं द्वारस्य दक्षवामोर्ध्वभागेषु क्रमेण—

ऐं ग्लौं भद्रकाल्यै नमः, भैरवाय, लम्बोदराय नमः ॥

इति तिस्रो द्वारदेवताः समर्च्य अन्तःप्रविष्टो रङ्गवल्लीपुष्पमालावितानकादिभिरलङ्कृत्य यागमन्दिरं, ऐं ग्लौं रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा, सपर्यासामग्रीं दक्षभागे निधाय, दीपानभितः प्रज्वाल्य, गन्धमाल्यादिभिरात्मानमलङ्कृत्य, ताम्बूलसुरभिलवदनो जातीपत्रफललवङ्गैलाकर्पूराख्यपञ्चतिक्तामोदितवदनो वा प्रसन्नमनाः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि बालान्त्यबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते आसने ऐं ग्लौं आधारशक्तिकमलासनाय नमः इति प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेनासनेनोपविश्य, ऐं ग्लौं शिवादिश्रीगुरुभ्यो नमः ऐं ग्लौं समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नमः इति मूर्धनि बद्धाञ्जलिः स्ववामदक्षपार्श्वयोः क्रमेण गुरुपादुकया श्रीगुरुं महागणपतिमन्त्रेण च गणपतिं प्रणम्य ऐं ग्लौं ऐं ह्वः अस्त्राय फट् इति मन्त्रेणावृत्तेन अङ्गुष्ठादिकरतलान्तं कूर्परयोः देहे [1]च क्रमेण न्यासव्यापके कृत्वा स्वस्य देवतैक्यं भावयन्,

ऐं ग्लौं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते [2]गच्छन्तु शिवाज्ञया ॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रितयक्रूरदृष्ट्यवलोकनपूर्वकं तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् । तालत्रयं नाम दक्षमध्यमातर्जनीभ्यामधोमुखाभ्यां वामकरतले सशब्दमुपर्युपरि त्रिरभिघातः ॥

[1] च व्यापकं कृत्वा—श्री, अ.
[2] नश्यन्तु इति पाठः 'न'

### प्राणायामः

अथ नमः इति अङ्गुष्ठमन्त्रमुच्चार्य अंकुशेन शिखां बद्ध्वा श्रीक्रमोक्तेन क्रमेण भूतशुद्धिं आत्मप्राणप्रतिष्ठां च विधाय मूलेन प्राग्वत् विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य ॥

### द्वितारीन्यासः

तेजोरूपदेवीमयं भावयन्नात्मानं स्वदेहे न्यासजालात्मकं वज्रकवचमामुञ्चेत् । तत्रादौ अं ऐं ग्लौं अं नमः शिरसि । आं ऐं ग्लौं आं नमः मुखवृत्ते । इत्यादिरीत्या क्षान्तमातृकासम्पुटितमुक्तबीजद्वयं मातृकास्थानेषु न्यसेत् ॥ इति द्वितारीन्यासः ॥

### करषडंगन्यासौ

ऐं ग्लौं अन्धे अन्धिनि नमः अङ्गुष्ठाभ्यां नमः ॥
२ रुन्धे रुन्धिनि नमः तर्जनीभ्यां नमः ॥
२ जम्भे जम्भिनि नमो मध्यमाभ्यां नमः ॥
२ मोहे मोहिनि नमः अनामिकाभ्यां नमः ॥
२ स्तम्भे स्तम्भिनि नमः कनिष्ठिकाभ्यां नमः ॥

इति पञ्चभिः मन्त्रैः अङ्गुष्ठादिकनिष्ठान्तं न्यस्य,

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि हृदयाय नमः ॥
२ वाराहि वाराहि शिरसे स्वाहा ॥
२ वराहमुखि वराहमुखि शिखायै वषट् ॥
२ अन्धे अन्धिनि नमः कवचाय हुम् ॥
२ रुन्धे रुन्धिनि नमः नेत्रत्रयाय वौषट् ॥
२ जम्भे जम्भिनि नमः अस्त्राय फट् ॥

इति मन्त्रैः हृदयादिषु न्यसेत् ॥ इति करषडङ्गन्यासौ ॥

नेह करन्यासे अस्त्रमन्त्रः, तेन करतलन्यासो न भवति ॥

### अर्घ्यशोधनम्

ततः श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत् । अत्र चोभयोरप्यर्घ्ययोः प्रवेशरीत्या अन्तरन्तश्चतुरस्रादिमण्डलकरणम्, २ अं आत्मतत्त्वाय आधारशक्तये वौषट् इत्याधारस्थापनम्, २ उं विद्यातत्त्वाय पद्मासनाय वौषट् इति पात्रनिधानम्, २ मं शिवतत्त्वाय सोममण्डलाय नम इति शुद्धजलापूरणम्,

ऐं ग्लौं ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥

इति क्षीरपूरणे मन्त्रान्तरं चोक्तम्, षडङ्गं, चतुर्नवतिमन्त्राभिमन्त्रणाभावः, मूलेन दशधा अभिमन्त्रणं च विशेषः । अथ विशेषार्घ्यबिन्दुभिः सपर्यासामग्रीं पावयित्वा ॥

### सप्तार्णमन्त्रपञ्चकन्यासः

अन्धे अन्धिनि नमः इत्यादीन् पञ्चमन्त्रान् उक्तबीजद्वयादिकान् शिरोवदनहृदयगुह्यपादेषु न्यस्य,

### अष्टखण्डन्यासः

मूलस्य खण्डैरष्टभिः वक्ष्यमाणेषु स्थानेषु न्यसेत् । तथा—

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि

२ अन्धे अन्धिनि नमः इत्याजानुकटि ॥

२ रुन्धे रुन्धिनि नमः इत्याकटिनाभि ॥

२ जम्भे जम्भिनि नमः इत्यानाभिहृदयम् ॥

२ मोहे मोहिनि नमः इत्याहृदयकण्ठम् ॥

२ स्तम्भे स्तम्भिनि नमः इत्याकण्ठभ्रूमध्यम् ॥

२ सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं नमः इत्याभ्रूमध्यललाटम् ॥

२ ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट् इत्याललाटब्रह्मरन्ध्रं चेति ॥

### मातृकास्थानेषु मूलपदन्यासः

ततो मूलमन्त्रस्य द्विचत्वारिंशत्पदानि [1]मातृकास्थानेषु न्यसेत् । यथा—

ऐं ग्लौं ऐं नमः शिरसि, ग्लौं मुखवृत्ते, ऐं नेत्रयोः, नमो कर्णयोः, भगवति नासापुटयोः, वार्तालि कपोलयोः, वार्तालि ओष्ठयोः, वाराहि दन्तपङ्क्तयोः वाराहि [2]ब्रह्मरन्ध्रे, वराहमुखि [3]मुखान्तः, वराहमुखि दक्षदोर्मूले, अन्धे तन्मध्यसन्धौ, अन्धिनि तन्मणिबन्धे, नमो तदङ्गुलिमूले, रुन्धे तदङ्गुल्यग्रे, रुन्धिनि वामदोर्मूले, नमो तन्मध्यसन्धौ, जम्भे तन्मणिबन्धे, जम्भिनि तदङ्गुलिमूले, नमो तदङ्गुल्यग्रे, मोहे दक्षोरुमूले, मोहिनि तज्जानुनि, नमो तत्पादसन्धौ, स्तम्भे तदङ्गुलिमूले, स्तम्भिनि तदङ्गुल्यग्रे, नमो वामोरुमूले, सर्वदुष्टप्रदुष्टानां वामजानुनि, सर्वेषां तत्पादसन्धौ, सर्ववाक्चित्त-चक्षुर्मुखगतिजिह्वास्तम्भनं तदङ्गुलिमूले, कुरु तदङ्गुल्यग्रे, कुरु पार्श्वयोः, शीघ्रं पृष्ठे, वश्यं नाभौ, ऐं जठरे, ग्लौं हृदि, ठः दक्षकक्षे, ठः अपरगळे, ठः वामकक्षे, ठः हृदादिहस्तयोः, हुं हृदादिपादयोः, अस्त्राय हृदादिपाय्वन्तम्, ऐं ग्लौं फट् नमः—हृदादिमूर्धान्तम् ॥ इति ॥

### तत्त्वाष्टकन्यासः

ततः ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि इत्यादिरीत्या प्रागुक्तानां अष्टानां खण्डानां प्रत्येकमन्ते क्रमेण ह्लां शर्वाय क्षितितत्त्वाधिपतये नमः, ह्लीं भवाय अम्बुतत्त्वाधिपतये नमः, ह्लूं रुद्राय वह्नितत्त्वाधिपतये नमः, ह्लैं उग्राय वायुतत्त्वाधिपतये नमः, ह्लौं ईशानाय भानुतत्त्वाधिपतये नमः, सों महादेवाय सोमतत्त्वाधिपतये नमः, हं पशुपतये यजमानतत्त्वाधिपतये नमः, भौं भीमाय आकाशतत्त्वाधिपतये नमः, इति उक्तेषु पादादिजान्वित्यादिषु अष्टसु स्थानेषु तत्त्वाष्टकं न्यसेत् ॥

[1]स्वांगेषु न्यसेत्—ब२, ब३, अ.
[2]जिह्वाग्रे—श्री.
[3]कण्ठे—श्री.

### यन्त्रप्राणप्रतिष्ठा

अथ व्यापकत्रयं मूलेन कृत्वा स्वपुरतः श्वेतपटपट्टदुकूलान्यतमे लिखिते लेखिते वा सुवर्णरजतताम्रचन्दनपीठादौ लिखिते उत्कीर्णे वा दृष्टिमनोहरे भूपुरत्रय-सहस्रपत्रशतपत्राष्टपत्रषडरपञ्चारत्र्यस्रबिन्दुमये चक्रे कुसुमाञ्जलिं विकीर्य

ऐं ग्लौं वार्ताळियन्त्रस्य प्राणाः इह प्राणाः, ऐं ग्लौं वार्ताळियन्त्रस्य जीव इह स्थितः, ऐं ग्लौं वार्ताळियन्त्रस्य सर्वेन्द्रियाणि, ऐं ग्लौं वार्ताळि-यन्त्रस्य वाङ्मनःप्राणाः इहायान्तु स्वाहा ॥

इति यन्त्रप्राणप्रतिष्ठां विदध्यात् ॥

### पीठपूजा

ऐं ग्लौं स्वर्णप्राकाराय नमः, सुराब्धये, वराहद्वीपाय, वराहपीठाय, आं आधारशक्तये, कूं कूर्माय, कं कन्दाय, अं अनन्तनाळाय नमः ॥ इति पीठस्य मध्ये ॥

ऐं ग्लौं ॠं धर्माय नमः, ॠं ज्ञानाय, ऌं वैराग्याय, ॡं ऐश्वर्याय नमः ॥ इति तस्य आग्नेयादिदिक्षु ॥

ऐं ग्लौं ॠं अधर्माय नमः, ॠं अज्ञानाय, ऌं अवैराग्याय, ॡं अनैश्वर्याय नमः ॥ इति प्रागाद्यासु दिक्षु चाभ्यर्च्य ॥

ऐं ग्लौं त्र्यरपञ्चारषडरदळाष्टकशतपत्रसहस्रारपद्मासनाय नमः इति चक्रमनुना चक्रमिष्ट्वा ॥

ऐं ग्लौं वह्निमण्डलाय नमः, सूर्यमण्डलाय, सोममण्डलाय, सं सत्त्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः ॥ इति च तत्रैव वरिवस्येत् ॥

स्वर्णप्राकाराय नमः इत्याद्याः ह्रीं ज्ञानात्मने नमः इत्यन्ताः एते सप्तविंशतिः पीठमनवो ज्ञेयाः ॥

### आसनपूजा

ततः २ ह्रौं प्रेतपद्मासनाय सदाशिवाय नमः इति पुष्पैः बिन्दौ देव्यासनमभिपूज्य,

### मूर्तिकल्पनम्

तत्र २ ल्ह षा ई वराहमूर्तये ठः ठः ठः ठः हुं फट् ग्लौं ऐं इति मूर्तिकरण्या विद्यया चक्रे देव्या मूर्तिं सङ्कल्प्य,

### देवीध्यानम्

हृदि देवीं ध्यायेत् । यथा—

पाथोरुहपीठगतां पाथोधरमेचकां कुटिलदंष्ट्राम् ।
कपिलाक्षित्रितयां घनकुचकुम्भां प्रणतवाञ्छितवदान्याम् ॥
दक्षोर्ध्वतोरिखड्गौ मुसलमभीतिं तदन्यतस्तद्वत् ॥
शङ्खं खेटहलवरान् करैर्दधानां स्मरामि वार्ताळीम् ॥

अरिः सुदर्शनम् ॥

### देव्याः षोडशोपचारपूजा

अथ वक्ष्यमाणेन प्रकारेण देव्यै मनसा पञ्चोपचारानर्पयित्वा भक्तानुग्रहात्तेजोरूपेण परिणतां ब्रह्मरन्ध्रं प्राप्य वहन्नासापुटद्वारा निर्गतां कुसुमगर्भिते निजाञ्जलौ सन्निहितां तां मूर्तौ मूलविद्यया आवाह्य आवाहिता भवेत्यादिरीत्या तत्तन्मुद्राप्रदर्शनपूर्वकं आवाहन-संस्थापन-सन्निधापन-सन्निरोधन-सम्मुखीकरण-अवगुण्ठानानि विधाय वन्दन-धेनुयोनिमुद्राश्च प्रदर्शयेत् । मुद्राप्रकारस्तु श्रीप्रकरणे उक्तोऽनुसन्धेयः । ततः—ऐं ग्लौं ऐं नमो भगवति वार्ताळि वार्ताळि हृदयाय नमः इत्यादिकान् प्रागुक्तान् षडंगमन्त्रान् २ अन्धे अन्धिनि नमः इत्यादिकान् पंचांगमन्त्रांश्च न्यासोक्तभङ्ग्या देव्याः तत्तदङ्गे कुसुमेन विन्यस्य, ऐं ग्लौं वाराह्यै पाद्यं कल्पयामि नमः इत्यादिरीत्या देव्यै पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरयुगळदर्पणनैवेद्यपानीयताम्बूलाख्यान् षोडशोपचारान् कृत्वा, नैवेद्याङ्गत्वेन पूर्वोत्तरापोशनकरप्रक्षाळन-गण्डूषाचमनीयानि च प्रदद्यात् । नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया चामृतीकरणम्, मूलेन सप्तवारमभिमन्त्रणम्, प्राणादिमुद्राप्रदर्शनं च विधेयम् ॥

## देवीतर्पणम्

अथ मूलान्ते वार्ताळीश्रीपादुकां पूजयामि तर्पयामीति वामकरतत्त्वमुद्रासन्दष्ट-द्वितीयशकलगृहीतक्षीरबिन्दुसहपतितैः दक्षकरोपात्तकुसुमक्षेपैः देवीं दशवारं सन्तर्प्य पूर्वोक्तानां षडङ्गमन्त्राणां अन्ते—हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, शिरःशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, कवचशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, नेत्रशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, इति क्रमेण देव्यङ्गे अग्नीशासुरवायुकोणेषु मौळौ प्रागादिदिक्षु च षडङ्गानि सम्पूज्य ॥

## ओघत्रययजनम्

पृष्ठतः प्रागपवर्गरेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं यजेत् । यथा—

ऐं ग्लौं परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमेशानन्द, परशिवानन्द (परसिद्धानन्द इति पाठान्तरं), कामेश्वर्यम्बानन्द, मोक्षानन्द, कामानन्द, अमृतानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति दिव्यौघः ॥

ऐं ग्लौं ईशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः तत्पुरुषानन्द, अघोरानन्द, वामदेवानन्द, सद्योजातानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति सिद्धौघः ॥

ऐं ग्लौं पद्मोत्तरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमानन्द, सर्वज्ञानन्द, सर्वानन्द, सिद्धानन्द, गोविन्दानन्द, शङ्करानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति मानवौघः ॥

आहत्य एकोनविंशतिगुरवः ॥

## आवरणार्चनम्

अङ्गाद्यावरणान्तानां अर्चनप्रकारस्तु देव्यर्चनोक्त एव ॥

त्र्यस्रे देव्यग्रकोणमारभ्य प्रादक्षिण्यक्रमेण—

ऐं ग्लौं जम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः, मोहिनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति प्रथमावरणम् ॥

पञ्चारे प्राग्वत्—

ऐं ग्लौं अन्धिनीश्रीपादुकां पूजयामि तर्पयामि नमः, रुन्धिनी, जम्भिनी, मोहिनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति द्वितीयावरणम् ॥

षट्कोणस्य कोणमूलेषु प्राग्वत्—

ऐं ग्लौं आ क्षा ई ब्राह्मीश्रीपादुकां पूजयामि तर्पयामि नमः, ई ळा ई माहेश्वरी, ऊ हा ई कौमारी, ऋ सा ई वैष्णवी, ऐ शा ई इन्द्राणी, औ वा ई चामुण्डाश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य,

तस्यैव कोणाग्रेषु मध्ये च प्राग्वत्—

ऐं ग्लौं य म र यूं यां यीं यूं यैं यौं यः याकिनि जम्भय जम्भय मम सर्वशत्रूणां त्वग्धातुं गृह्ण गृह्ण अणिमाऽऽदि वशं कुरु कुरु स्वाहा याकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ र म र यूं रां रीं रूं रैं रौं रः राकिनि जम्भय जम्भय मम सर्वशत्रूणां रक्तधातुं पिब पिब अणिमाऽऽदि वशं कुरु कुरु स्वाहा राकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ ल म र यूं लां लीं लूं लैं लौं लः लाकिनि जम्भय जम्भय मम सर्वशत्रूणां मांसधातुं भक्षय भक्षय अणिमाऽऽदि वशं कुरु कुरु स्वाहा लाकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ ड म र यूं डां डीं डूं डैं डौं डः डाकिनि जम्भय जम्भय मम सर्वशत्रूणां मेदोधातुं ग्रस ग्रस अणिमाऽऽदि वशं कुरु कुरु स्वाहा डाकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ क म र यूं कां कीं कूं कैं कौं कः काकिनि जम्भय जम्भय मम सर्वशत्रूणां अस्थिधातुं भञ्जय भञ्जय अणिमाऽऽदि वशं कुरु कुरु स्वाहा काकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ स म र यूं सां सीं सूं सैं सौं सः साकिनि जम्भय जम्भय मम सर्वशत्रूणां मज्जाधातुं गृह्ण गृह्ण अणिमाऽऽदि वशं कुरु कुरु स्वाहा साकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ ह म र यूं हां हीं हूं हैं हौं हः हाकिनि जम्भय जम्भय मम सर्वशत्रूणां शुक्रधातुं पिब पिब अणिमाऽऽदि वशं कुरु कुरु स्वाहा हाकिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

इति धातुनाथानिष्ट्वा,

षडरस्य दक्षवामपार्श्वयोः क्रमेण—

ऐं ग्लौं क्रोधिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

२ स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

तत्रैव—

२ स्तम्भनमुसलायुधाय नमः ॥

२ आकर्षणहलायुधाय नमः ॥

षडरात् बहिः देव्याः पुरतः—

ऐं ग्लौं क्षौं क्रौं चण्डोच्चण्डाय नमः ॥ इति तृतीयावरणम् ॥

अष्टदले प्राग्वत्—

ऐं ग्लौं वार्ताळीश्रीपादुकां पूजयामि तर्पयामि नमः, वाराही, वराहमुखी, अन्धिनी, रुन्धिनी, जम्भिनी, मोहिनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः ॥

तद्बहिः पुरतो देव्याः—

ऐं ग्लौं महामहिषाय देवीवाहनाय नमः ॥ इति चतुर्थावरणम् ॥

शतपत्रे देवीपुरतोऽष्टत्रिंशद्दलसन्धिषु—

ऐं ग्लौं जम्भिन्यै नमः, इन्द्राय, अप्सरोभ्यः, सिद्धेभ्यः, द्वादशादित्येभ्यः, अग्नये, साध्येभ्यः, विश्वेभ्यो देवेभ्यः, विश्वकर्मणे, यमाय, मातृभ्यः, रुद्रपरिचारकेभ्यः, रुद्रेभ्यः, मोहिन्यै, निर्ऋतये, राक्षसेभ्यः, मित्रेभ्यः, गन्धर्वेभ्यः, भूतगणेभ्यः, वरुणाय, वसुभ्यः, विद्याधरेभ्यः, किन्नरेभ्यः, वायवे, स्तम्भिन्यै, चित्ररथाय, तुम्बुरवे, नारदाय, यक्षेभ्यः, सोमाय, कुबेराय, देवेभ्यः, विष्णवे, ईशानाय, ब्रह्मणे, अश्विभ्यां धन्वन्तरये, विनायकेभ्यो नमः ॥

तद्बहिः—

ऐं ग्लौं रौं क्षौं क्षेत्रपालाय नमः ॥

२ सिंहवराय देवीवाहनाय नमः ॥

तद्बहिः—

ऐं ग्लौं महाकृष्णाय मृगराजाय देवीवाहनाय नमः ॥ इति पञ्चमावरणम् ॥

सहस्रारे अष्टधा विभक्ते प्रतिपञ्चविंशत्युत्तरशतदळं प्राग्वत् क्रमेण—

ऐं ग्लौं ऐरावताय नमः, पुण्डरीकाय, वामनाय, कुमुदाय, अञ्जनाय, पुष्पदन्ताय, सार्वभौमाय, सुप्रतीकाय नमः ॥

एते दिग्गजाः सुराब्धेर्बहिर्वा प्रागाद्यासु यष्टव्याः । बाह्यप्राकारस्याष्टासु प्रागाद्यासु दिक्षु अध ऊर्ध्वं च क्रमेण प्राग्वत्—

ऐं ग्लौं क्षौं हेतुकभैरवक्षेत्रपालाय नमः । हेतुकभैरवश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ त्रिपुरान्तकभैरवक्षेत्रपालाय नमः । त्रिपुरान्तकभैरवश्री०

३ अग्निभैरवक्षेत्रपालाय नमः । अग्निभैरवश्री०

३ यमजिह्वभैरवक्षेत्रपालाय नमः । यमजिह्वभैरवश्री०

३ एकपादभैरवक्षेत्रपालाय नमः । एकपादभैरवश्री०

३ कालभैरवक्षेत्रपालाय नमः । कालभैरवश्री०

३ कराळभैरवक्षेत्रपालाय नमः । कराळभैरवश्री०

३ भीमरूपभैरवक्षेत्रपालाय नमः । भीमरूपभैरवश्री०

३ हाटकेशभैरवक्षेत्रपालाय नमः । हाटकेशभैरवश्री०

३ अचलभैरवक्षेत्रपालाय नमः । अचलभैरवश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति षष्ठावरणम् ॥

सर्वा अप्यावरणदेवताः देव्यभिमुखासीनाः, स्वयं च तत्तदभिमुखः पूजयामि इति भावयेत् ॥

## देवीपुनःपूजाऽऽदि बलिदानान्तम्

इत्थं षडावरणीमभ्यर्च्य पुनर्देवीं त्रिवारं सन्तर्प्य पुनः षोडशभिः उपचारैः उपचर्य श्रीक्रमोक्तेन विधिना होमं तदन्ते बलिदानं च कुर्यात् ॥

होमाकरणपक्षे—देव्याः पुरतो वामभागे हस्तमात्रं सामान्योदकेनोपलिप्य, त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य, रुधिरान्नहरिद्रान्नमाहिषद्वितयसक्तुशर्करा-हेतुफलत्रयमाक्षिकमुद्गत्रयमाषचूर्णदधिक्षीरघृतैः शुद्धौदनं संमर्द्य, कुक्कुटाण्डप्रमाणान् दश पिण्डान् कपित्थफलमानं च एकं पिण्डं विधाय तत्र निधाय, तत्समीपे सादिमसद्वितीयतृतीयं चषकं च निक्षिप्य, ऐं ग्लौं क्षौं हेतुकभैरवक्षेत्रपालाय नमः इत्यादिभिः पूर्वोक्तैः दशभिः मन्त्रैः हेतुकादिभ्योऽचलान्तेभ्यो दशभ्यः क्रमेण दश पिण्डान् दशदिक्षु दत्त्वा, मध्ये स्थूलमेकं पिण्डं चषकं च ऐं ग्लौं क्षौं क्रौं [1]चण्डोच्चण्डाय नमः इति मन्त्रेण तस्मै दद्यात् ॥

फलत्रयम्—त्रिफला । मुद्गत्रयं—हरितं [2]कृष्णं पीतम् ॥

अथ पाणिं प्रक्षाळ्य देव्यै पुष्पाञ्जलित्रयं दत्त्वा प्रदक्षिणनमस्कारोत्तरं जपेत् ॥

## वाराहीमन्त्रजपः

यथा—

अस्य श्रीवाराहीमहामन्त्रस्य ब्रह्मणे ऋषये नमः इति शिरसि, गायत्र्यै छन्दसे नमः इति मुखे, वाराह्यै देवतायै नम इति हृदये, ऐं ग्लौं बीजाय

[1] चं चण्डो—अ१, श्री.

[2] कृष्णं पीतं वा—ब२, ब३. कृष्णं सूक्ष्मं पीतं वा—अ. कृष्णां सूक्ष्मं च—अ१. कृष्टां कृष्टा सूक्ष्मं च—भ.

नमः इति गुह्ये, फट् शक्तये नमः इति पादयोः, ठः ठः ठः ठः कीलकाय नमः इति नाभौ, मम सर्वाभीष्टसिद्ध्यर्थे विनियोगाय नमः इति करसम्पुटे च न्यस्य, मूलेन त्रिः व्यापकं कृत्वा, अन्धे अन्धिनि नमः इत्यादिभिः पञ्चभिः मन्त्रैः पूर्वोक्तैः अङ्गुष्ठादिकनिष्ठान्तं, २ ऐं नमो भगवति वार्तालि वार्तालि हृदयाय नमः इत्यादिभिश्च हृदयादिषु न्यासं विधाय, उक्तप्रकारेण ध्यात्वा, मनसा २ श्रीवाराह्यै लं पृथिव्यात्मकं गन्धं कल्पयामि नमः, २ श्रीवाराह्यै हं आकाशात्मकं पुष्पं कल्पयामि नमः, २ श्रीवाराह्यै यं वाय्वात्मकं धूपं कल्पयामि नमः, २ श्रीवाराह्यै रं अग्न्यात्मकं दीपं कल्पयामि नमः, २ श्रीवाराह्यै वं अमृतात्मकं नैवेद्यं कल्पयामि नमः, नैवेद्याङ्गत्वेन च २ श्रीवाराह्यै सं सर्वात्मकं ताम्बूलं कल्पयामि नमः, इति पञ्चोपचारानाचर्य, विघ्नदेव्यङ्गोपाङ्गप्रत्यङ्गसहितं मूलमन्त्रमष्टोत्तरशतवारान् यथाशक्ति वा श्रीक्रमोक्तेन विधिना जपेत् ॥

स्तं स्तम्भिन्यै नमः इति वाराह्या विघ्नदेवीमन्त्रः । एतं जपारम्भे त्रिवारं जपेत् । मूलमन्त्रश्च न्यासोक्ताष्टखण्डसमष्टिरूपः । लं वाराही ल्लं उन्मत्तभैरवीपादुकाभ्यां नमः इति वाराह्यङ्गं लघुवाराही । ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा इति तदुपाङ्गं स्वप्नवाराही । ऐं नमो भगवति महामाये पशुजनमनश्चक्षुस्तिरस्करणं कुरु कुरु हुं फट् स्वाहा इति तत्प्रत्यङ्गं तिरस्करिणी । एतान् त्रीन् मन्त्रान् मूलजपान्ते तद्दशांशं जपेत् । पुनः न्यासध्यानादि कृत्वा जपं निवेद्य स्तुवीत ॥

## वाराहीस्तोत्रम्

यथा—

कुवलयनिभा कौशेयार्धोरुका मुकुटोज्ज्वला
हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी ।
कपिलनयना मध्ये क्षामा कठोरघनस्तनी
जयति जगतां मातः सा ते वराहमुखी तनुः ॥ १ ॥

तरति विपदो घोरा दूरात्परिह्रियते भय-
स्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया ।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं
वशयति जगत्सर्वं वाराहि यस्त्वयि भक्तिमान् ॥ २ ॥

स्तिमितगतयस्सीदद्वाचः परिच्युतहेतयः
क्षुभितहृदयास्सद्यो नश्यद्दृशो गळितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषाः
भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ॥ ३ ॥

किसलयमृदुर्हस्तः क्लिश्येत कन्दुकलीलया
भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से [1]हस्ते हलं समयद्रुहां
हरसि च तदाघातैः प्राणानहो तव साहसम् ॥ ४ ॥

जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयोः
मृदुभुजलतामन्दाक्षेपप्रणर्तितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवै-
रुपशमयतां शत्रून् सर्वानुभे मम दैवते ॥ ५ ॥

हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां
रुधिरमदिरामत्तः प्राणोपहारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुखो
भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः ॥ ६ ॥

क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परै-
श्चतुरुदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ॥
जननि कथमुत्तिष्ठेत् पाताळसर्पबिलादिला
तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ॥ ७ ॥

तमसि बहुळे शून्याटव्यां पिशाचनिशाचर-
प्रमथकलहे चोरव्याघ्रोरगाद्विपसङ्कटे ।

[1] धत्से—भ, ब२, ब३.

क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतो भयं
सकृदपि मुखे मातस्त्वन्नाम सन्निहितं यदि ॥ ८ ॥

विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं
सकलफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां
सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम् ॥ ९ ॥ इत्यनुग्रहाष्टकम् ॥

देवि क्रोडमुखि त्वदङ्घ्रिकमलद्वन्द्वानुषक्तात्मने
मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः ।
[1]तस्याद्य त्वदयोऽग्रनिष्ठुरहलाघातप्रभूतव्यथा-
पर्यस्यन्मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः ॥ १ ॥

देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि
प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्ते मयि ।
यो देही भुवने तदीयहृदयान्निर्गत्वरैर्लोहितैः
सद्यः पूरयसे कराब्जचषकं वाञ्छाफलैर्मामपि ॥ २ ॥

चण्डोच्चण्डमखण्डदुष्टहृदयप्रोक्षिप्तरक्तच्छटा-
हालापानमदाट्टहासजनिताटोप[2]प्रतापोत्कटम् ।
मातर्मत्परिपन्थिनामपहृतैः प्राणैस्त्वदङ्घ्रिद्वय-
ध्यानो[3]ड्डामरवैभवोदयवशात् सन्तर्पयामि क्षणात् ॥ ३ ॥

वाराहि व्यथमानमानसगळत्संज्ञं त्वदाज्ञाबलात्
सीदद्धैर्यमपाकृताद्ध्यवसितं प्राप्ताखिलार्थाहतिम् ।
क्रन्दद्बन्धुजनं कळङ्कितकुलं कण्ठे व्रणोद्यत्कृमिं
पश्यामि प्रतिपक्षमाशु सततं श्रान्तं लुठन्तं पुनः ॥ ४ ॥

वाराहि त्वमशेषजन्तुषु पुनः प्राणात्मिका स्पन्दसे
शक्तिव्याप्तचराचरामिह खलु त्वामेतदभ्यर्थये ।
त्वत्पादाम्बुजसाङ्गिनो मम सकृत् पापं चिकीर्षन्ति ये
तेषां मा कुरु शङ्करप्रियतमे देहान्तरावस्थितिम् ॥ ५ ॥

[1] तस्याशु—श्री, अ १. [2] स्फुरद्दृक्षसम्—ब२, ब३, अ, भ. [3] ड्डामरवैभ—ब१, ब२, अ.

विश्वाधीश्वरवल्लभे विजयसे या त्वं नियत्यात्मिके
भूतानां पुरुषायुषावधिकरी पाकप्रदा कर्मणाम् ।
तां याचे भवतीं किमप्यवितथं योऽस्मद्विरोधी जन-
स्तस्यायुर्मम वाञ्छितावधि भवेन्मातस्तवैवाज्ञया ॥ ६ ॥
मातस्सम्यगुपासितुं जडमतिस्त्वां नाद्य शक्नोम्यहं
यद्यप्यञ्चितदेशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे ।
जन्तुः कश्चन चिन्तयत्यकुशलं यस्तस्य तद्वैशसं
भूयाद्देवि विरोधिनो मम [1]च ते श्रेयःपदासङ्गिनः ॥ ७ ॥
श्यामां तामरसारुणत्रिणयनां सोमार्धचूडां जग-
त्त्राणव्यग्रहलामुदग्रमुसलामत्रस्तमुद्रावतीम् ।
ये त्वां रक्तकपालिनीं शिववरारोहे वराहाननां
भावे सन्दधते कथं क्षणमपि प्राणन्ति तेषां द्विषः ॥ ८ ॥

इति निग्रहाष्टकम् ॥

## बृन्दाराधनं, गुरुसंतोषणं, शक्तिवटुकपूजा च

अथ योगिनीवीरयुग्मसमुदायात्मकं बृन्दं गन्धादिभिः आराध्य, यथाविभवं श्रीगुरुं सन्तोष्य, समग्रयौवना लक्षणवतीः मदनविवशाः तिस्रः शक्तीर्वटुकं चाहूयाभ्यज्य स्नपयित्वा, मध्ये वार्ताळीबुद्ध्यैकां क्रोधिनीस्तम्भिनीबुद्ध्या च द्वे पार्श्वयोरुपवेश्य, चण्डोच्चण्डधिया वटुकं चाग्रे समुपवेश्य द्वितारीनमःसम्पुटितैः तत्तन्नाममन्त्रैः गन्धादिभिः क्षीरादिभिश्च सर्वैः द्रव्यैः सन्तोष्य, मम श्रीवार्ताळीमन्त्रसिद्धिः भूयादिति शक्तीः प्रार्थयेत् । ताश्च प्रसीदन्त्वधिदेवता इति प्रतिब्रूयुः ॥

## हविःप्रतिपत्तिः

अथ श्रीक्रमोक्तक्रमेण हविःप्रतिपत्तिकर्मादिविशेषार्घ्यविसर्जनान्तं शेषं निर्वर्तयेत् । हविःप्रतिपत्तौ मूलेन तत्त्वत्रयशोधनमेवेति विशेषः ॥

[1] सकृद्यत्त्वत्पदा—भ, ब२, ब३, अ.

### मन्त्रसाधनम्

एवं नित्यक्रममाचरन् श्यामाक्रमोक्तेन पुरश्चरणप्रकारेण प्रत्यहं सहस्रसङ्ख्यया लक्षसङ्ख्याकं प्रकृते कलियुगत्वाच्चतुर्गुणितं जपं पुरश्चरणं कृत्वा तद्दशांशं नारिकेळोदकैः सन्तर्प्य, तद्दशांशं तापिञ्छकुसुमैः तिलैः चुलुकमितैः शतसङ्ख्याकैर्वा हरिद्राखण्डैर्वा तन्त्रान्तरोक्तैः त्रिमध्वक्तैः हेतुमिश्रैश्च जुहुयात् । इह पञ्चधोपचारात् प्राक् महाव्याहृत्यादिषु च आज्येनैव होमः । इतरेषु तापिञ्छादिना । एवं सिद्धमन्त्रः स्वतन्त्रोपास्तौ श्रीक्रमोक्तेन क्रमेण [1]नैमित्तिकार्चनरतः सत्यां कामनायां पूर्वोक्तेनैव क्रमेण तत्तत्काम्यानुगुणं होमं कृत्वा सफलमनोरथ आज्ञासिद्धः सुखी विहरेत् । इति शिवम् ॥

इति श्रीभासुरानन्दनाथचरणारविन्दमिळिन्दायमानमानसेन उमानन्दनाथेन
विरचिते कल्पसूत्रानुसारिणि नित्योत्सवे अभिनवे
निबन्धे तदन्तोल्लासः पञ्चमः सम्पूर्णः ॥

---

[1] नित्यनै—ब२, ब३, अ.

## उन्मनोल्लासः षष्ठः—परापद्धतिः

### उपोद्घातः

नत्वा श्रीभासुरानन्दनाथपादाम्बुजद्वयम् ।
गृणात्युमानन्दनाथ उन्मनोल्लासवैभवम् ॥
आराधनपदं यत्र परा श्रीहृदयात्मिका ।
पदे पदे सुखानि स्युः प्रभुचित्तविदो न किम् ॥
दीक्षाविधिरिहापेक्ष्य आरम्भोल्लास ईक्ष्यताम् ।
न तु सन्ध्योपास्तिरुक्ता सूत्रकारैरसूत्रणात् ॥
पञ्चमीमभिराध्याथ पराक्रमपरो भवेत् ।
एतस्मिन् मनवः सर्वे शक्तिबीजादिमाः स्मृताः ॥

### काल्यकृत्यं आह्निकं च

श्रीमान् साधकः कल्ये प्रबुद्धः शयन एव स्थितः श्रोत्राचमनभस्मधारणे विधाय, श्रीक्रमोक्तेन क्रमेण श्रीगुरोर्ध्यानं वक्ष्यमाणया मूलपूर्विकया सामान्यपादुकया उक्तसुमुखादिमुद्राप्रदर्शनपूर्वकं वन्दनं च विधाय, वक्ष्यमाणया रीत्या प्राणानायम्य ब्रह्मरन्ध्रसम्बन्धिनि सहस्रदलकमले सुखासीनाया वक्ष्यमाणध्यानोक्तमूर्त्याः शक्ति-बीजाभिन्नायाः पराऽम्बायाः चरणयुगळविगळदमृतरसविसरपरिप्लुतं ध्यात्वा आत्मानं, मूलं मनसा दशवारमावर्त्त्य, वहन्नाडीपार्श्वपदमुत्थाय, निर्वर्तितावश्यकः उक्तया भङ्ग्या विहितदन्तधावनादिस्नानश्च शुचिवासो वसानः विधृतपुण्ड्रः सर्वेण मूलेन त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसे नाभिं हृदयं शिरश्चावमृशेत् ॥

### यागमन्दिरप्रवेशः

एवं त्रिराचम्य, यागमन्दिरमासाद्य, द्वारस्थण्डिलं गोमयेनोपलिप्य, यागगृहं च रङ्गवल्लीपुष्पमालिकावितानादिभिश्चालङ्कृत्य द्वारस्य दक्षवामशाखयोः ऊर्ध्वभागे च क्रमेण—

सौः भद्रकाळ्यै नमः, भैरवाय, लम्बोदराय नमः ॥

इति तिस्रो द्वारदेवताः सम्पूज्य, अन्तः प्रविष्टः सौः रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा, सपर्यासामग्रीं स्वदक्षिणभागे निधाय, प्रज्वालितदीपो गन्धमाल्यादिभिरलङ्कृतात्मा जातीपत्रफलैलालवङ्गकर्पूराख्यपञ्चतिक्तेनामोदितवदनः प्रसन्नमनाः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि मूलेन द्वादशवारमभिमन्त्रिते सकृत्प्रोक्षिते चासने सौः आधारशक्तिकमलासनाय नमः इति प्राङ्मुख उदङ्मुखो वा पद्मस्वस्तिकाद्यन्यतमेन आसनेनोपविश्य, सौः समस्तगुप्तप्रकटसिद्धयोगिनीचक्रदेवताश्रीपादुकाभ्यो नमः इति मूर्धनि बद्धाञ्जलिः सौः ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौं स्हौः अमुकाम्बासहितामुकानन्दनाथश्रीगुरुश्रीपादुकां पूजयामीति मन्त्रेण मस्तके निजदेशिकमभिवन्द्य गं गणपतये नमः इति [1]मूर्धनि बद्धाञ्जलिः

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रितयक्रूरदृष्ट्यवलोकनपूर्वकं ताळत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् । ताळत्रयलक्षणं तु पूर्वोक्तमेव ग्राह्यम् ॥

### प्राणायामः

अथ श्रीक्रमोक्तेन विधिना भूतशुद्धिमात्मप्राणप्रतिष्ठां च विधाय सौःवर्णपूर्वकं मातृकावर्णैः श्रीक्रमोक्तेन क्रमेण बहिर्मातृकान्यासं कृत्वा षोडशवारमावृत्तेन मूलेन पूरकं चतुःषष्टिवारमावृत्तेन कुम्भकं द्वात्रिंशद्वारमावृत्तेन रेचकं इति विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य ॥

[1] वामस्कंधे इति 'न'

### अङ्गन्यासः

तेजोरूपदेवीमयं भावयन्नात्मानं मुहुरावृत्तेन सौः नमः इति नमोऽन्तेन मूलेन शिरोमुखहृन्मूलाधारेषु न्यासं विधाय, सर्वाङ्गे च व्यापकं कृत्वा, सौः स् हृदयाय नमः, सौः औ शिरसे स्वाहा, सौः : शिखायै वषट्, सौः स् कवचाय हुम्, सौः औ नेत्रत्रयाय वौषट्, सौः : अस्त्राय फट्, इति मूलमन्त्रावयवैर्द्विरावृत्तैः वर्णषडङ्गं, सर्वेण मूलेन षड्वारमावृत्तेन मन्त्रषडङ्ग च कुर्यात् । इह मूलमन्त्रस्य तृतीयोऽवयवः केवलो विसर्गो न त्वकारविशिष्ट इति च ज्ञेयम् ॥

### चिदग्नौ सर्वतत्त्वविलापनम्

अथ काकचञ्चूपुटाकृतिना मुखेन बाह्यमनिलमन्तराकृष्य संस्तभ्य, मूलं सप्तविंशतिवारमावर्त्य, वक्ष्यमाणक्षित्यादिशिवान्तषट्त्रिंशत्तत्त्वात्मकं वेद्यं नाभौ मुद्रितं विभाव्य, पुनः प्रोक्तवारं मूलं जप्त्वा, नम इति शिखाबन्धोत्तरं पुनः पूर्ववत् अनिलमापूर्य, तेन सर्वकारणचिद्रूपमग्निमुद्दीप्य, तत्र प्राङ्मुद्रितस्य वेद्यस्य विलयनं भावयित्वा ॥

### अर्घ्यशोधनम्

श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत् । अत्र चोभयोरप्यर्घ्ययोः प्रवेशरीत्या अन्तरन्तश्चतुरस्रादिबिन्द्वन्तमण्डलकरणम्, अं आत्मतत्त्वाय आधारशक्त्यै वौषडित्याधारस्थापनम्, उं विद्यातत्त्वाय पद्मासनाय वौषडिति पात्रनिधानम्, मं शिवतत्त्वाय सोममण्डलाय नम इति शुद्धसलिलापूरणम् ।

ब्रह्माण्डखण्डसम्भूतमशेषरससंभृतम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥

इति क्षीरपूरणम्, हृदयशक्तिश्रीपादुकां पूजयामीत्याद्यस्त्रान्तं प्रागुक्तषडङ्गद्वयम्, मूलेन दशधा अभिमन्त्रणम्, चतुर्नवतिमन्त्राभिमन्त्रणाभावश्च विशेषः । ततो विशेषार्घ्यबिन्दुभिः सम्प्रोक्ष्य वरिवस्यावस्तूनि ॥

### तत्त्वकदम्बस्य हृत्पद्मस्थापनम्

पूर्वं नाभौ मुद्रयित्वा तप्तायोद्रवमिव चिदग्नौ विलापितं षट्त्रिंशत्तत्त्वकदम्बरूपं वेद्यं हृत्सरोजमानीय स्थापयेत् ॥

### पराचक्रनिर्माणम्

अथ सकुसुमक्षेपैः मूलपूर्वकैः वक्ष्यमाणैः मन्त्रैः पराम्बायाश्चक्ररूपं आसनं निर्मिमीत । यथा—

सौः पृथ्वीयोगपीठाय नमः, अप्, तेजः, वायु, आकाश, गन्ध, रस, रूप, स्पर्श, शब्द, उपस्थ, पायु, पाद, पाणि, वाक्, घ्राण, जिह्वा, चक्षुः, त्वक्, श्रोत्र, अहङ्कार, बुद्धि, मनः, प्रकृति, पुरुष, नियति, काल, विद्या, कला, राग, माया, शुद्धविद्या, ईश्वर, सदाशिव, शक्ति, शिवयोगपीठाय, नमः ॥

इत्येवं पराचक्रं निर्माय ॥

### चक्रे देव्याः पूजा

ब्रह्मरन्ध्रे—

अकळङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तलसद्बाहा पातु मां परमा कला ॥

इति ध्यातां सादाख्यचन्द्रकलारूपां श्रीपराम्बां मूलेन हृदयगते पराचक्रे आवाह्य, मूलान्ते श्रीपराम्बाऽऽवाहिता भव इत्यादिरीत्या तत्तन्मुद्राविधानपूर्वकं आवाहनाद्यवगुण्ठनान्तं कृत्वा, वन्दनधेनुयोनिमुद्राः प्रदर्श्य, मूलेन पुनः पुनरावृत्तेन श्रीपरादेव्यै पाद्यं कल्पयामि नमः इत्यादिरीत्या पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरयुगदर्पणनैवेद्यपानीयताम्बूलाख्यान् षोडशोपचारान् विधाय, नैवेद्याङ्गत्वेन पूर्वोत्तरापोशने हस्तप्रक्षाळनगण्डूषाचमनीयानि च दद्यात् । नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया अमृतीकरणम्, मूलेन सप्तवाराभिमन्त्रणम्, प्राणादिमुद्राप्रदर्शनं चानुष्ठेयम् । ततो वामकरतत्त्वमुद्रासन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दुसहपतितैः दक्षकरोपात्तैः कुसुमैः, सौः स्

प्रकाशरूपिणीपराभट्टारिकाश्रीपादुकां पूजयामि तर्पयामि नमः, सौः औ विमर्शरूपिणीपराभट्टारिकाश्रीपादुकां पूजयामि तर्पयामि नमः, सौः : प्रकाशविमर्शरूपिणीपराभट्टारिकाश्रीपादुकां पूजयामि तर्पयामि नमः, इति त्रिभिः मन्त्रैः क्रमेण देव्या मूलाधारहृन्मुखेष्वभ्यर्च्य, सौः महाप्रकाशविमर्शरूपिणीपराभट्टारिकाश्रीपादुकां पूजयामि तर्पयामि नमः इति मन्त्रेण देवीं दशवारं सन्तर्प्य ॥

## देव्यां अखिलतत्त्वहोमभावनम्

तामेव कालाग्निकोटिदीप्तां ध्यात्वा, तस्यां सौः पृथ्वीं जुहोमि स्वाहा, सौः अपो जुहोमि स्वाहा, इत्यादिरीत्या प्राग्विलाप्य हृदये स्थापितं षट्त्रिंशत्तत्त्वकदम्बकं पृथक् पृथक् मनसा जुहुयात् ॥

इह क्रमे अयमेव होमः ॥

## गुर्वोघत्रययजनम्

ततो मूलपूर्विकयोक्तया श्रीगुरुपादुकया मस्तकस्थं श्रीगुरुं त्रिः सम्पूज्य पुनश्चिदग्निमुद्दीप्तं विभाव्य देव्याः पश्चात् प्रागपवर्गे रेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं यजेत् । यथा—

सौः पराभट्टारिकादेव्यम्बाश्रीपादुकां पूजयापि तर्पयामि नमः, अघोरानन्दनाथश्री°, श्रीकण्ठानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति दिव्यौघः ॥

सौः शक्तिधरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, क्रोधानन्दनाथश्री°, त्र्यम्बकानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति सिद्धौघः ॥

सौः आनन्दानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, प्रतिभादेव्यम्बानन्द, [1]वीरानन्द, संविदानन्द मधुरादेव्यम्बानन्द, ज्ञानानन्द, श्रीरामानन्द, योगानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति मानवौघः ।

[1] परा—अ.

## बलिदानम्

ततः त्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा ऐं व्यापकमण्डलाय नमः इति पुष्पेणाभ्यर्च्य, अर्धान्नं सलिलपूर्णं सक्षीरोपादिममध्यमं च पात्रं निधाय, ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहेति त्रिः पठित्वा बलिं दत्त्वा, तत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि निषिच्य, वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो नाराचमुद्रया बलिं भूतैः ग्राहयित्वा, पाणी प्रक्षाळ्य, मानसिकीः प्रदक्षिणनतीः विधाय, देव्यै पुष्पाञ्जलिं दद्यात् ॥

## परामनुजपः

अथ अस्य श्रीपराभट्टारिकामहामन्त्रस्य भैरवाय ऋषये नमः इति शिरसि, गायत्र्यै छन्दसे नमः इति मुखे, पराऽम्बायै देवतायै नमः इति हृदये, सं बीजाय नमः इति गुह्ये, [1]औः[1] शक्तये नमः इति पादयोः [2](कीलकाय नमः इति नाभौ), मम सर्वाभीष्टसिद्धये विनियोगाय नमः इति करसम्पुटे च न्यस्य, मूलेन त्रिर्व्यापकं कृत्वा,

सां अङ्गुष्ठाभ्यां (हृदयाय) नमः, सीं तर्जनीभ्यां नमः (शिरसे स्वाहा), सूं मध्यमाभ्यां नमः (शिखायै वषट्), सैं अनामिकाभ्यां नमः (कवचाय हुं), सौं कनिष्ठिकाभ्यां नमः (नेत्रत्रयाय वौषट्), सः करतलकरपृष्ठाभ्यां नमः (अस्त्राय फट्) इति मन्त्रैः कराङ्गन्यासौ कृत्वा,

अकळङ्केति ध्यात्वा,

सौः परादेव्यै लं पृथिव्यात्मकं गन्धं समर्पयामि, सौः परादेव्यै हं आकाशात्मकं पुष्पाणि पूजयामि, सौः परादेव्यै यं वाय्वात्मकं धूपमाघ्रापयामि, सौः परादेव्यै रं अग्न्यात्मकं दीपं दर्शयामि, सौः परादेव्यै वं अमृतात्मकं नैवेद्यं निवेदयामि, सौः परादेव्यै सं सर्वात्मकं ताम्बूलादिसर्वोपचारान् समर्पयामि इति षडुपचारैः मनसा अभ्यर्च्य,

मूलं सहस्रं त्रिशतं शतं वा श्रीक्रमोक्तेन विधिना जप्त्वा स्तुवीत ॥

[1] सौः—अ, अ१. १ औ इति 'न' २ कील० इति 'न'

[2] अयं कुण्डलितो भागः (श्री) कोश एव.

## परास्तुति

यथा—

याऽघोरादिभिरेतैः पारम्पर्यक्रमागतैर्नाथैः ।
प्रथते तां विश्वमयीं विश्वातीतां स्वसंविदं नौमि ॥ १ ॥
आनन्दचरणकमलामकळङ्कशशाङ्कमण्डलच्छायाम् ।
तन्मण्डलाधिरूढां तत्कलया कलितचित्कलां नौमि ॥ २ ॥
इच्छादिशक्तिशूलांबुजमूलां मूलकुण्डलीरूपाम् ।
नित्यामप्यणुरूपामणोश्च महतो महीयसीं नौमि ॥ ३ ॥
मौक्तिकमणिगणरुचिरां शशाङ्कनिर्मोकनिर्मलं क्षौमम् ।
निवसानां परमेशीं नमामि सौवर्णसम्पुटान्तःस्थाम् ॥ ४ ॥
भक्तजनभेदभञ्जनचिन्मुद्राकलितदक्षपाणितलाम् ।
पूर्णाहन्ताकारणपुस्तकवर्येण रुचिरवामकराम् ॥ ५ ॥
सृष्टिस्थितिलयकृद्विर्नयनाम्भोजैश्शशीनदहनाख्यैः ।
मौक्तिकताटङ्काभ्यां मण्डितमुखमण्डलां परां नौमि ॥ ६ ॥
षड्गतिषड्डर्मिषडरीन् धिक्कृत्याशु स्वभक्तवर्गस्य ।
कञ्चुकपञ्चकनोदनसञ्चितसंवित्प्रकाशिनीं नौमि ॥ ७ ॥
अध्वातीतं बुद्ध्वा बुधाः प्रबुद्धाः परं पदं यस्याः ।
कैवल्यं यान्ति हठात् कटाक्षपातेन तां परां नौमि ॥ ८ ॥
यः पठतीदं स्तोत्रं पात्रं स भवेच्च पञ्चवर्गस्य ।
गुरुचरणकमलभाजा सहजानन्देन योगिनाऽभिहितम् ॥ ९ ॥

इति परास्तुतिः सम्पूर्णा ॥

## हविःशेषस्वीकरणम्

अथ—

सौः आत्मतत्त्वं शोधयामि नमः स्वाहा ॥
सौः विद्यातत्त्वं शोधयामि नमः स्वाहा ॥
सौः शिवतत्त्वं शोधयामि नमः स्वाहा ॥

इति मन्त्रैः तत्त्वत्रयशोधनपूर्वकं हविःशेषं स्वीकृत्य, मूलेन देवीं विसृज्य, तेनैव ब्रह्मरन्ध्रं नीत्वा विशेषार्घ्यपात्रमामस्तकमुद्धृत्य, "आर्द्रं ज्वलति" इति मन्त्रेण तदर्घ्यमात्मनः कुण्डलिन्यग्नौ हुत्वा कामकलाऽऽत्मकं देवीरूपं भावयन्नात्मानं कृतकृत्यो भवेत् ॥

### मन्त्रसाधनम्

एवं नित्यक्रमं निर्वर्तयन् श्यामाक्रमोक्तक्रमेण लक्षजपं पुरश्चरणं कलौ तच्चतुर्गुणितं प्रत्यहमयुतसङ्ख्यया ग्रहणादिजपप्रत्याम्नायान्वा कृत्वा, होमतर्पण-ब्राह्मणभोजनानि क्रमेण दशांशतः कुर्यात् । होमद्रव्यस्य तन्त्रान्तरेष्वदर्शनात्, आज्यमेव । ततः सिद्धमनुः काम्यलिप्सुर्यदि श्यामाक्रमोक्तैरेव द्रव्यैः हुत्वा पूर्णमनोरथः सुखी विहरेत् । एतदेकविश्रान्तिमभिलषतोऽपि अयमेवोपास्तिक्रमः इति शिवम् ॥

इति भासुरानन्दनाथचरणारविन्दमिलिन्दायमानमानसेन उमानन्दनाथेन
निर्मिते अभिनवे कल्पसूत्रानुसारिणि नित्योत्सवनिबन्धे
पराक्रमनिरूपणो नाम उन्मनोल्लासः षष्ठः सम्पूर्णः ॥

---

## अनवस्थोल्लासः सप्तमः—साधारणक्रमः

### उपोद्घातः

नत्वा श्रीभासुरानन्दनाथपादाम्बुजद्वयम् ।
नन्दत्युमानन्दनाथोऽनवस्थोल्लासकल्पनात् ॥
साधारणो यत्र सर्वोपास्यानां क्रम ईरितः ।
आरम्भोल्लासगीता स्यादिह दीक्षा पृथक् पृथक् ॥
सत्रितार्या बालया च सर्वेऽङ्गमनवो मताः ।
मन्त्रेऽनुक्तषडङ्गे तु मायाषड्दीर्घजातियुक् ॥

तत्र तावदुक्तगुणः साधकः उक्ते काले सद्गुरोः अवाप्तदीक्षाविधिः एतत्क्रमान्ते वक्ष्यमाणेन प्रकारेण शोधितसिद्धसाध्यारिभावं अवमृष्टऋणधनादिकं च स्वेष्टमन्त्रमासाद्य तत्प्रतिपाद्यदेवताक्रमं यावज्जीवं निर्वर्तयेत् ॥

### काल्यकृत्यं आह्निकं च

इह प्रकृतिभूतात् श्रीक्रमतः काल्यकृत्याह्निकयोः विशेषो यथा—श्रीगुरुपादुकायामादौ त्रितार्युत्तरं बाला वाक् ग्लौमिति पञ्चबीजयोजनम्, हृदि रविबिम्बे च तत्तद्देवताध्यानम्, रश्मिस्रगननुस्मरणम्, यथोचितं तत्र तत्र सम्बुद्ध्यादीनामूहः, मूलेनार्घ्यदानम्, तन्त्रान्तरोक्तं तत्तदृष्यादिन्यासत्रयं षडङ्गं च, अनुक्तौ तु वक्ष्यमाणं चेति ॥

### यागमन्दिरप्रवेशः

अथ यागमन्दिरमागत्य, द्वारस्थण्डिलं गोमयेनोपलिप्य, देवताऽऽयतनं च रङ्गवल्लीपुष्पमालावितानादिभिश्चालङ्कृत्य, द्वारस्य दक्षवामशाखयोरूर्ध्वभागे च क्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः भद्रकाळ्यै नमः, भैरवाय नमः, लम्बोदराय नमः ॥

इति तिस्रो द्वारदेवताः सम्पूज्य, अन्तः प्रविष्टः ६ रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा, सपर्यासामग्रीं स्वस्य दक्षिणतो निधाय, दीपानभितः प्रज्वाल्य, दीपौ वा, गन्धमाल्यादिभिः अलङ्कृतात्मा ताम्बूलेन जातीपत्रफललवङ्गैलाकर्पूराख्यपञ्चतिक्तेन वा सुरभिळवदनः प्रसन्नचेताः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि बालातृतीयबीजेन द्वादशवारमभिमन्त्रिते मूलयन्त्रोक्षिते आसने ६ आधारशक्तिकमलासनाय नमः इति प्राङ्मुख उदङ्मुखो वा पद्मस्वास्तिकाद्यन्यतमेनासनेनोपविश्य, ६ समस्तगुप्तप्रकटसिद्धयोगिनीचक्रदेवताश्रीपादुकाभ्यो नमः इति मूर्धनि बद्धाञ्जलिः स्ववामदक्षपार्श्वयोः क्रमेण, ६ गुं गुरुभ्यो नमः, ६ गं गणपतये नमः, इति श्रीगुरुं गणपतिं च प्रणम्य, ६ ऐं हः अस्त्राय फट् इति मन्त्रेण मुहुर्मुहुरावृत्तेन अङ्गुष्ठादिकरतलान्तं कूर्परयोश्च विन्यस्य, देहे च व्यापकं कृत्वा, आत्मनो देवतैक्यं भावयन्, ६ "अपसर्पन्तु" इति मन्त्रं सकृदुच्चार्य, युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रितयक्रूरदृष्ट्यवलोकनपूर्वकं ताळत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् । ताळत्रयं तूक्तमेव ॥

### प्राणायामः

ततो ६ नमः इत्यङ्गुष्ठमन्त्रमुच्चार्य, [1]अंकुशेन शिखां बध्वा, श्रीक्रमोक्तक्रमेण भूतशुद्धिं आत्मप्राणप्रतिष्ठां च विधाय, मूलेन प्रागुक्तवद्विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य ॥

### मातृकाषडंगन्यासौ

तेजोमयदेवतारूपं भावयन् आत्मानं त्रितारीबालापूर्वकं मातृकान्यासं तन्त्रान्तरोक्तं तत्तद्देवताषडङ्गन्यासं च कृत्वा, अनुक्तौ तु ६ ह्रां हृदयाय नमः, ६ ह्रीं शिरसे स्वाहा, ६ ह्रूं शिखायै वषट्, ६ ह्रैं कवचाय हुम्, ६ ह्रौं नेत्रत्रयाय वौषट्, ६ हः अस्त्राय फट्, इति [2]षडङ्गं न्यस्य ॥

[1] 'कुशेन' इति बहुकोशपाठः.

[2] करषडंगन्यासौ कृत्वा—अ.

## अर्घ्यशोधनम्

श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत् । अत्र चोभयोरप्यर्घ्ययोः प्रवेशभङ्ग्याऽन्तरन्तश्चतुरस्रादिबिन्द्वन्तमण्डलकरणम्, ६ अं आत्मतत्त्वाय आधारशक्तये वौषडित्याधारस्थापनम्, ६ उं विद्यातत्त्वाय पद्मासनाय वौषट् इति पात्रनिधानम्, ६ मं शिवतत्त्वाय सोममण्डलाय नमः इति शुद्धजलपूरणम्,

ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥

इति क्षीरपूरणम्, तत्तद्देवताषडङ्गं, उक्तषडङ्गं वा, मूलेन दशधा अभिमन्त्रणम्, चतुर्नवतिमन्त्राभिमन्त्रणाभावश्चेति विशेषः । अथ विशेषार्घ्यबिन्दुभिः सम्प्रोक्ष्य वरिवस्यावस्तूनि,

## यन्त्रोद्धारः

उपलिप्तायां भुवि क्षीरमिश्रेण सिन्दूरादिना बिन्दुत्रिकोणषट्कोणाष्टदळ-चतुर्दळचतुरस्रात्मकं चक्रं विलिख्य विलेख्य वा, चामीकररजतपञ्चलोहरत्नस्फटिका-द्युत्कीर्णं वा रक्तचन्दनादिनिर्मिते पीठे निवेश्य, ६ अमुकयन्त्रस्य प्राणा इह प्राणाः, ६ अमुकयन्त्रस्य जीव इह स्थितः, ६ अमुकयन्त्रस्य सर्वेन्द्रियाणि, ६ अमुकयन्त्रस्य वाङ्मनःप्राणाः इहायान्तु स्वाहा इति यन्त्रप्राणप्रतिष्ठां विदध्यात् । इह मन्त्रे तत्तद्देवतानामपदोहज्ञापकममुकेतिपदं ज्ञेयम् । अथ ६ आधारशक्तिकमलासनाय नमः इति मन्त्रेण तत्र पीठे पुष्पाञ्जलिं समर्प्य ॥

## चक्रे प्रधानदेवतायाः तदंगदेवतानां च पूजा

स्वहृदि तत्तद्देवतां ध्यात्वा, ६ अमुकायै लं पृथिव्यात्मकं गन्धं कल्पयामि नमः इत्यादि सं सर्वात्मकं ताम्बूलं इत्यन्तषडुपचारैरुपचर्य, ततस्तां देवतां भक्तानुग्रहात्तेजोरूपेण परिणतां ब्रह्मरन्ध्रं प्रापय्य वहन्नासापुटद्वारा बहिर्निर्गतां कुसुमगर्भिते अञ्जलौ सन्निधाय मूर्तिमतीं च मूलेन बिन्दौ आवाह्य, "आवाहिता भव" इत्यादिरीत्या यथालिङ्गं आवाहनसंस्थापनसन्निधापनसन्निरोधनसम्मुखीकरणाव-

१ परि० २ये

गुण्ठनानि तत्तन्मुद्रया कृत्वा, वन्दनधेनुयोनिमुद्राः प्रदर्श्य, सामान्यार्घ्योदकेन ६ अमुकायै पाद्यं कल्पयामि नमः इत्यादिरीत्या पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरयुगदर्पणनैवेद्यपानीयताम्बूलाख्यान् षोडशोपचारान्, नैवेद्याङ्गत्वेन पूर्वोत्तरापोशने हस्तप्रक्षाळनगण्डूषकरणाचमनीयानि च दद्यात् । नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया अमृतीकरणम्, मूलेन सप्तवाराभिमन्त्रणम्, प्राणादिमुद्राप्रदर्शनं चानुष्ठेयम् । ततो मूलान्ते अमुकदेवताश्रीपादुकां पूजयामि इति मन्त्रेण वामकरतत्त्वमुद्रासन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दुसहपतितैः दक्षकरोपात्तकुसुमैः प्रधानदेवतां त्रिः सन्तर्प्य, तस्याग्नीशासुरवायुषु मौळौ प्रागादिदिक्षु च क्रमेण तत्तद्देवताषडङ्गमन्त्रैः ६ हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि इति क्रमेण षडङ्गमन्त्रैः अङ्गदेवताः समभ्यर्च्य ॥

## गुर्वोघत्रययजनम्

प्रधानदेवतायाः पश्चात् प्रागपवर्गं दक्षिणसंस्थाक्रमेण तत्तत्तन्त्रोक्तं गुर्वोघत्रयं यजेत् । तदज्ञाने तु—

ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं गुरुभ्यो नमः, ६ ऐं गुरुपादुकाभ्यो नमः । इति दिव्यौघः ॥

६ ऐं परमगुरुभ्यो नमः, ६ ऐं परमगुरुपादुकाभ्यो नमः । इति सिद्धौघः ॥

६ ऐं आचार्येभ्यो नमः, ६ ऐं आचार्यपादुकाभ्यो नमः, ६ ऐं पूर्वसिद्धेभ्यो नमः, ६ ऐं पूर्वसिद्धपादुकाभ्यो नमः । इति मानवौघः ॥

इति गुर्वोघत्रयम् ॥

## आवरणार्चनम्

त्र्यस्रे देवताऽग्रकोणमारभ्य प्रादक्षिण्यक्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः इच्छाशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, ज्ञानशक्तिश्री०, क्रियाशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति प्रथमावरणम् ॥

षडस्रे प्राग्वत् तन्त्रान्तरोक्तोपलब्धतत्तद्देवताषडङ्गमन्त्रोत्तरं हृदयशक्ति-श्रीपादुकां पूजयामि तर्पयामि नमः । तदज्ञाने ६ ह्रां हृदयाय नमः हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः इत्यादिरीत्या अङ्गदेवतापूजनं वा ॥ इति द्वितीयावरणम् ॥

अष्टदले पारिभाषिकपश्चिमादिदिक्षु वाय्वादिविदिक्षु च प्रादक्षिण्यक्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः आं ब्राह्मीश्रीपादुकां पूजयामि तर्पयामि नमः, ईं माहेश्वरी, ऊं कौमारी, ॠं वैष्णवी, ॡं वाराही, ऐं माहेन्द्री, औं चामुण्डा, अः महालक्ष्मीपादुकां पूजयामि तर्पयामि नमः ॥ इति तृतीयावरणम् ॥

चतुर्दले देव्यग्रदळादिप्रादक्षिण्यक्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः गणपतिश्रीपादुकां पूजयामि तर्पयामि नमः, दुर्गा, वटुक, क्षेत्रपालश्रीपादुकां पूजयामि तर्पयामि नमः ॥ इति चतुर्थावरणम् ॥

चतुरस्ररेखायां यथास्थितप्रागादिप्रादक्षिण्यक्रमेण—

ऐं ह्रीं श्रीं ऐं क्लीं सौः लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः ॥

६ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः ॥

६ टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय नमः ॥

६ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः ॥

६ वां वरुणाय पाशहस्ताय सलिलाधिपतये मकरवाहनाय सपरिवाराय नमः ॥

६ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः ॥

६ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः ॥

६ हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः ॥

इत्यभ्यर्च्य ॥ इति पञ्चमावरणम् ॥

**देवतायाः पुनःपूजा**

अथ पुनर्मूलेन देवतां त्रिः सन्तर्प्य, पुनः धूपदीपनैवेद्यताम्बूलानि दत्वा ॥

**होमः**

सति सम्भवे श्रीक्रमे होमप्रकरणोक्तेन क्रमेण स्थण्डिलकल्पनादिप्रधानदेवता-पञ्चोपचारान्ते— ६ इच्छायै स्वाहा इच्छाया इदं न मम इत्यादिरीत्या—आवरणदेवता-क्रमेण इच्छाऽऽदिभ्यः ईशानान्ताभ्यो देवताभ्यः एकैकामाज्याहुतिं मूलेन प्रधानदेवतायै दशवारं च हुत्वा विधिशेषं निर्वर्तयेत् ॥

होमाकरणपक्षे बलिमात्रं दद्यात् । यथा—देवताया दक्षिणतः त्रिकोणवृत्त-चतुरस्रात्मकं मण्डलं कृत्वा, ६ ऐं व्यापकमण्डलाय नमः इति पुष्पैरभ्यर्च्य, अर्धभक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य, ६ ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा इति मन्त्रं त्रिः पठित्वा, बलिं प्रदाय, दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि निषिच्य समुदञ्चितवक्त्रः ताळत्रयं कुर्वन् बाणमुद्रया बलिं भूतैः ग्राहयित्वा, योनिमुद्रया प्रणमेत् इति ॥

**प्रदक्षिणनतिमूलमन्त्रजपाः**

अथ प्रक्षाळितपाणिः प्रदक्षिणनतीर्विधाय, तत्तत्तन्त्रोक्तर्ष्यादिन्यासत्रय-कराङ्गन्यासध्यानान्ते देवतायै पुष्पाञ्जलिं दत्त्वा, मूलमष्टोत्तरशतवारं जप्त्वा, पुनर्न्यासादि कृत्वा, गुह्यातिगुह्येति मन्त्रेण देवतावामहस्ते सामान्यजलेन जपं समर्पयेत् । देवतापुंस्त्वे तु गोप्ता त्वं देवेति वाच्यम् । देव्या वामकरो देवस्य दक्षकरश्च जपसमर्पणाधिकरणम् ॥

ऋष्यादीनामज्ञाने—अस्य श्रीअमुकमन्त्रस्य ब्रह्मणे ऋषये नमः इति शिरसि, गायत्र्यै छन्दसे नमः इति मुखे, अमुकदेवतायै नमः इति हृदये, ॐ बीजाय नमः इति गुह्ये, ह्रीं शक्तये नमः इति पादयोः, मम सर्वाभीष्टसिद्ध्ये विनियोगाय नमः इति करसम्पुटे च न्यस्य, मूलेन त्रिर्व्यापकं कृत्वा, उक्तषडङ्गं कराङ्गयोः विन्यस्य, तत्तद्देवताऽनुगुणं ध्यात्वा, श्यामाक्रमोक्तान्यतमया मालया श्रीक्रमोक्तविधिना जप्त्वा स्तुवीत ॥

## देवतास्तुतिः

यथा—

सच्चित्सुखैकरूपं सकलजगद्भाससंश्रयीभूतम् ।
भक्तेष्वनुग्रहवशात् बहुधोपास्यात्मकं भजे वस्तु ॥ १ ॥
पीतारुणादिभासं फलदानायाभिसन्धिभेदेन ।
आसेचनकावयवामासेवे देवतामिहोपास्याम्, ॥ २ ॥
द्विचतुःप्रमुखैर्दोर्भिर्विधृतवराभीतिशूलचक्राद्यैः ।
पालितविश्वत्रितयः पायान्मां कोऽपि निरवधिर्भूमा ॥ ३ ॥
बिन्दुत्रिकोणषडरद्विपदळवेदच्छदैः सचतुरस्रैः ।
चारुणि विहारशीलं चक्रे कलयामि किञ्चन ज्योतिः ॥ ४ ॥
इच्छाऽऽदिभिस्तथाऽङ्गैर्ब्राह्म्याद्याभिर्गणेश्वरप्रष्ठैः ।
इन्द्रादिभिश्च पञ्चभिरावरणैः स्तौमि दैवतं सेव्यम् ॥ ५ ॥
एकार्णादिशतार्णावधिकैर्मनुभिर्निरुच्यमानात्मा ।
यन्त्रमनुदेशिकस्वोपासकभेदातिगा चिदाविः स्यात् ॥ ६ ॥
कल्पोक्तसङ्ख्यजपतद्दशांशहोमादिमोदितस्वान्तम् ।
वाञ्छितदायि विपक्षव्ययदक्षं भातु साधकश्रेयः ॥ ७ ॥
दीनाधीनदयारसवशंवदस्मेरसुन्दरापाङ्गा ।
मूर्तिमती मम मुनिभिर्महनीया भाग्यधोरणी जयति ॥ ८ ॥
साधारणमपि तदिदं स्तोत्रमसाधारणप्रभावाढ्यम् ।
पठतां क्रमावसाने प्रथते पुंसां मनीषितमशेषम् ॥ ९ ॥

इति श्रीभासुरानन्दनाथान्तेवासिना शुभा ।
कृतोमानन्दनाथेन साधकश्रेयसे स्तुतिः ॥

## सुवासिनीपूजादि विशेषार्घ्यविसर्जनान्तम्

अथ श्रीक्रमोक्तेन क्रमेण पञ्चमवर्जं यथार्हपञ्चमसहितं वा सुवासिनीपूजनम्, तत्त्वत्रयशोधनम्, हविःप्रतिपत्तिं च निर्वर्त्य, मूलेन देवतामावाहनविलोमक्रमेण आत्मन्युद्वास्य, विशेषार्घ्यं विसृजेत् ।

## मन्त्रसाधनम्

एवं नित्यसपर्यां कुर्वन् श्यामाक्रमोक्तेन क्रमेण पुरश्चरणजपं तत्तत्कल्पोक्तसङ्ख्याकं, अनुक्तावक्षरलक्षसङ्ख्याकं, कलौ तच्चतुर्गुणितं, प्रत्यहं त्रिसहस्रादिक्रमेण कृत्वा, होमतर्पणब्राह्मणभोजनानि तत्तद्दशांशं कुर्यात् । होमश्च द्रव्यविशेषादर्शने आज्येनैव । अथ सिद्धमन्त्रः श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरो यदि काम्यमभिलषेत् तदुक्तप्रकारेण जपादिकं विदध्यात् ॥ इति सर्वदेवतासाधारणक्रमः ॥

## मन्त्राणां जातिनिर्णयः अधिकारिभेदश्च

अत्रोपदेश्यानां मन्त्राणां सामान्यतो जातिनिर्णयोऽधिकारिभेदश्च निरूप्यते । सौत्रामणितन्त्रे—

मायाबीजं ब्राह्मणः स्याच्छ्रीबीजं क्षत्रियः स्मृतम् ।
कामबीजं भवेद्वैश्यो वाग्भवं शूद्र ईरितम् ॥
चतुर्बीजपरित्यक्तो मन्त्रः पौलस्त्यसंज्ञकः ।
चतुर्बीजं ब्राह्मणानां क्षत्रियाणां त्रिबीजकम् ॥
बीजद्वयं तु वैश्यानां शूद्राणां त्वेकबीजकम् ॥ इति ॥

अस्यार्थः—मा ये ति हृल्लेखा । श्रीकामबीजवाग्भवैः प्रत्येकं सम्बद्धा मन्त्राः क्रमेण ब्राह्मणादयः स्युः इत्यर्थः । च तु र्बी ज प रि त्य क्तः उक्तबीजचतुष्टयरहितः । च तु रिति प्रत्येकं प्रणवादिबीजचतुष्टयसम्बद्धाः मन्त्राः इत्यर्थः । दातव्या इति शेषः । इदं च पदं

प्रत्येकमिति च पदं उत्तरत्राप्यनुषज्यते । त्रि बी ज कं श्र्यादिबीजत्रययुक्ता इत्यर्थः । बीजद्वयं कामबीजवाग्भवयुक्ता इत्यर्थः । ए क मिति वाग्भवबीजयुक्ता इत्यर्थः ।

अथ मन्त्रविशेषाणां अधिकारिणः । कुलमूलावतारे—

उमामहेश्वरं चैव दक्षिणामूर्त्यघोरकम् ।
हयग्रीवं च वाराहमष्टाक्षरमतः परम् ॥
प्रणवाद्यं वासुदेवं लक्ष्मीनारायणं तथा ।
वर्णत्रये तु दातव्यं नान्यवर्णे कदाचन ॥
नारसिंहं पाशुपतं तथा चैव सुदर्शनम् ।
वर्णद्वये च दातव्यं नान्ययोश्चैव कर्हिचित् ॥
अग्निमन्त्राश्च ये केचित् सूर्यमन्त्राश्च ये तथा ।
तारादिघृणिमन्त्राश्च दातव्याश्च त्रिवर्णके ॥
आनुष्टुभं शक्तिमन्त्रास्तथा विन्ध्यनिवासिनी ।
समनीलसरस्वत्या दातव्याश्चादिवर्णके ॥
मातङ्गिन्युग्रतारा च कालिका श्यामळा तथा ।
छिन्नमस्ता च बाला च दातव्या सर्ववर्णके ॥
तारादिस्तु गणेशस्य हरिद्रासंज्ञकस्तथा ।
त्रिवर्णेष्वेव दातव्यः कथितः सर्वसिद्धिदः ॥
त्रिपुरायाश्च ये मन्त्राः ये मन्त्रा वटुकादयः ।
सर्ववर्णेषु दातव्याः पुरन्ध्रीणां विशेषतः ॥
हृदादिहुंफट्कारादि सङ्कराणां प्रशस्यते ॥ इति ॥

### कलौ सिद्धमन्त्राः

अथ कलौ सिद्धमन्त्राः—

त्र्यर्ण एकाक्षरोऽनुष्टुप् त्रिविधो नरकेसरी ।
एकाक्षरोऽर्जुनोऽनुष्टुब्द्विविधस्तुरगाननः ॥
चिन्तामणिः क्षेत्रपालो भैरवो यक्षनायकः ।
गोपालो गजवक्त्रश्च चेटका यक्षिणी तथा ॥

मातङ्गी सुन्दरी श्यामा ताराकर्णपिशाचिनी ।
शबर्येकजटा वामा काळी नीलसरस्वती ॥
त्रिपुरा काळरात्रिश्च कलाविष्टप्रदा इमे ॥ इति ॥

### गुरुशिष्ययोः वर्णाश्रमादिव्यवस्था

नारदपाञ्चरात्रे—

ब्राह्मणः सर्वकालज्ञः कुर्यात् सर्वेष्वनुग्रहम् ।
तदभावे द्विजश्रेष्ठः शान्तात्मा भगवन्मयः ॥
क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहक्षमः ।
क्षत्रियस्यापि च गुरोरभावादीदृशो यदि ॥
वैश्यः स्यात्तेन कार्यो वै द्वये नित्यमनुग्रहः ।
सजातीयेन शूद्रेण तादृशेन महामते ॥
अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वथा ।
वर्णोत्तमेऽथ च गुरौ सति वाऽपि श्रुतेऽपि वा ॥
स्वदेशतोऽथवाऽन्यत्र नेदं कार्यं शुभार्थिना ।
क्षत्रविट्शूद्रजातीयः प्रातिलोम्यं न दीक्षयेत् ॥ इति ॥

रुद्रयामळे—

न पत्नीं दीक्षयेत् भर्ता न पिता दीक्षयेत् सुताम् ।
न पुत्रं च तथा भ्राता भ्रातरं नैव दीक्षयेत् ॥ इति ॥

योगिनीतन्त्रे—

निर्वीर्यं तु पितुर्मन्त्रं तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ इति ॥

कनिष्ठस्य स्वापेक्षया न्यूनवयस्कस्य यस्य कस्यापि ॥

गणेशविमर्शिन्याम्—

प्रमादाच्च तथाऽज्ञानात् पितुर्दीक्षां समाचरन् ।
प्रायश्चित्तं ततः कृत्वा पुनर्दीक्षां समाचरेत् ॥ इति ॥

पितुरित्युपलक्षणं मातामहादीनामपि । प्रायश्चित्तं तु अयुतसावित्रीजपः सर्वत्र, तथा दर्शनात् । सिद्धमन्त्रग्रहणे तु नायं निषेधः ॥

तथा च सिद्धयामळे—

यदि भाग्यवशेनैव सिद्धविद्यां लभेत् प्रिये ।
तदैव तां तु दीक्षेत त्यक्त्वा गुरुविचारणाम् ॥ इति ॥

"सिद्धमन्त्रो न दुष्यति" इति तन्त्रान्तरवचनाच्च । पुण्यतीर्थे उपरागे सति पित्रादेरपि इष्टमन्त्रो ग्राह्य एव । तथाच वैशम्पायनसंहितायां व्यासवचनं शौनकं प्रति—

प्रसन्नहृदयः स्वस्थः पिता मे करुणानिधिः ।
कुरुक्षेत्रे महातीर्थे सूर्यपर्वणि दत्तवान् ॥ इति ॥

प्रकरणात् मन्त्रमिति सम्बध्यते । शैवागमेऽपि—

भिक्षुभ्यश्च वनस्थेभ्यो वर्णिभ्यश्च महेश्वरि ।
गृहस्थो भोगमोक्षार्थी मन्त्रदीक्षां न चाचरेत् ॥
त्यक्ताग्नयः क्रियाहीनाः यतयो ह्यपरिग्रहाः ।
वनस्थास्तादृशा एव वर्णी न्यूनाश्रमी यतः ॥

वर्णी ब्रह्मचारी न्यूनाश्रमी गृहस्थापेक्षया । एवं गृहस्थाद्यतिभिरपि मन्त्रो न ग्राह्य इत्यवगम्यते ॥

### वयोभेदेन सिद्धिप्रदा मन्त्राः

अथ बाल्ययौवनवार्धक्येषु सिद्धिप्रदाः मन्त्राः क्रमेण—

बीजमन्त्रास्तथा मन्त्रा मालामन्त्रा इति त्रिधा ।
बीजमन्त्रा दशार्णान्तास्ततो मन्त्रा नखावधि ॥
विंशत्यधिकवर्णा ये मालामन्त्रास्तु ते स्मृताः ॥ इति ॥

एत एव अवस्थान्तरेष्वपि द्विगुणजपात् सिध्यन्ति ॥

### मन्त्राणां व्यक्तिविशेषाः

पुंस्त्रीनपुंसकाः प्रोक्ता मनवस्त्रिविधा बुधैः ।
वषडन्ताः फडन्ताश्च पुमांसो मनवः स्मृताः ॥
वौषट्स्वाहाऽन्तिमा नार्यो हुंनमोन्ता नपुंसकाः ॥ इति ॥

एतेषां विनियोगस्तु—

वश्योच्चाटनरोधेषु पुमांसः सिद्धिदायकाः ।
क्षुद्रकर्मरुजां नाशे स्त्रीमन्त्राः शीघ्रसिद्धिदाः ।
अभिचारे स्मृताः क्लीबा एवं ते मनवस्त्रिधा ॥ इति ॥

### सिद्धारिशोधनप्रकारः

[1]अथाशङ्कादीनां बहूनां विचार्यत्वेऽप्यावश्यकमात्रं लिख्यते । तत्र सिद्धारिशोधनप्रकारः—

ऊर्ध्वाभिश्च तिरश्चीभिः रेखाभिः पञ्च पञ्चभिः ।
कोष्ठषोडशकं कृत्वा मातृकार्णैः प्रपूरयेत् ।
एकत्रिरुद्रनवदृङ्निगमार्कपंक्ति-
षण्णागभूपमनुबाणहयेषु तिथ्याम् ॥
कामे क्रमाद्कथहप्रभृतीन् मनीषी
वर्णान् समालिखतु षोडशषोडशत्रीन् ॥

अस्यार्थः—रुद्रः एकादशकोष्ठम् । दृक् द्वितीयम् । निगमाः चतुर्थम् । अर्कः द्वादशम् । पंक्तिः दशमम् । नागः अष्टमम् । भूपः षोडशम् । मनवः चतुर्दशम् । बाणाः पञ्चमम् । हयाः सप्तमम् । तिथिः पञ्चदशम् । कामः त्रयोदशं चेत्यर्थः । एकादितिथ्यन्तेषु कोष्ठेषु प्रथमं क्रमात् अकारादीन् स्वरान् विलिख्य, ततः कादितान्तान्, ततः थादिसान्तान् वर्णान् विलिख्य, ततः प्रथमकोष्ठे तृतीये एकादशे च हळक्षान् विलिखेत् इति ॥

विदिग्गतेषु कोष्ठानां चतुष्केषु चतुर्ष्विह ।
यत्र साधकनामादिवर्णस्तत्सिद्धिसंज्ञकम् ॥

[1]थांशकादी० इति 'न'

प्रादक्षिण्यक्रमेणास्माच्चतुष्कात्रितयं परम् ॥
साध्यं तथा सुसिद्धं च शत्रुश्चेत्यभिधीयते ॥
एकैकस्मिन् चतुष्केऽपि यस्मिन् कोष्ठे तदक्षरम् ।
तदाद्युक्तक्रमेणैव सिद्धसाध्यादिकल्पना ॥
एवं साध्यचतुष्कादौ तत्तुल्यस्थानकोष्ठतः ।
साध्यसिद्धः साध्यसाध्यः इत्याद्याख्याः क्रमान्मताः ॥
[1]सिद्धसिद्धप्रभृत्यर्थं न तत्षोडशसद्मसु ।
यत्र यस्य मनोराद्यो वर्णः सोऽपि तदाह्वयः ॥

स्पष्टोऽर्थः ॥

अथैतेषां फलानि कुलमूलावतारे—

सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ।
सुसिद्धस्तत्क्षणादेव अरिर्मूलं निकृन्तति ॥ इति ॥

तन्त्रराजे—

सिद्धसिद्धो जपात् सिध्येत् द्विगुणात् सिद्धसाध्यकः ।
सिद्धः सुसिद्धः संप्राप्तेः सिद्धारिर्हन्ति गोत्रजान् ॥
साध्यसिद्धोऽतिसंक्लेशात् साध्यसाध्योऽतिदुःखकृत् ।
साध्यसुसिद्धो भजनात् साध्यारिः स्वस्त्रियं हरेत् ॥
सुसिद्धसिद्धोऽर्धजपात् फलं दद्यात् यथेप्सितम् ।
सुसिद्धसाध्यो जापाद्यैः सिद्धये स्यादतोऽन्यथा ॥
सुसिद्धे च सुसिद्धस्तु पूर्वजन्मकृतश्रमः ।
तस्मात् तं सर्वसिद्धीनां साधने योजयेन्मनुम् ॥
सुसिद्धारिरशेषेण स्वकुलं मारयेत् ध्रुवम् ।
अरिसिद्धः सुतं हन्यादरिसाध्यस्तु कन्यकाम् ॥
तत्सुसिद्धस्तु पत्नीं स्वामर्यरिः साधकापहः ॥ इति ॥

संप्राप्तेः प्राप्तिमात्रात् । जापाद्यैरित्यादिशब्देन होमतर्पणब्राह्मणभोजनानि गृह्यन्ते ॥

[1]सिद्धसाध्यप्रभृत्यर्णः यन्त्रषोडशसद्मसु—अ१.

### ऋणधनशोधनप्रकारः

द्विगुणीकृत्य साध्यस्थं स्वरव्यञ्जनमण्डलम् ।
साधकाख्याजुषा तेन मेळयित्वाऽष्टभिर्हरेत् ॥
शेषः साध्यस्य राशिः स्याद्योजयेत् [1]साधकेऽन्यथा ।
साधकाधिकशेषस्तु ऋणी साध्यः शुभावहः ॥
शोधितो न्यूनशेषस्तु वर्णलक्षजपाच्छुभः ॥ इति ॥

साध्यो मन्त्रः, तेन स्वरव्यञ्जनसमुदायेन । अन्यथेति साधकनामगतं स्वरव्यञ्जनसमूहं द्विगुणीकृत्य साध्यगतस्वरव्यञ्जननिकरेण सम्मेळ्य अष्टभिः हरेत् । शेषं साधकराशिं जानीयादित्यर्थः शोधित इति-उक्तेन सिद्धारिक्रमेण शोधितोऽनुकूलो मन्त्रो यदि साधकान्न्यूनशेषः स्यात्तदा यावत्या वर्णसङ्ख्यया न्यूनता तावल्लक्षजपादिना ऋणमपाकृत्य पुरश्चरणादिकं कुर्यादित्यर्थः । प्रकारान्तराणि चान्यतो ज्ञातव्यानीति दिक् ॥

### [2]ऋणिधनिचक्रम्

कोष्ठान्येकादशान्येव वेदेन पूरितानि च ।
अकारादिहकारान्तं लिखेत् कोष्ठेषु तत्त्ववित् ॥
प्रथमं पञ्चकोष्ठेषु ह्रस्वदीर्घक्रमेण तु ।
द्वयं द्वयं लिखेत्तत्र विचारे खलु साधकः ॥
शेषेष्वेकैकवर्णांस्तु क्रमतस्तु लिखेत् सुधीः ।
षट्कालकालवियदग्निसमुद्रवेद-
खाकाशशून्यदहनाः खलु साध्यवर्णाः ।
युग्मद्विपञ्चवियदम्बरयुक्शशाङ्क-
व्योमाब्धिवेदशशिनः खलु साधकार्णान् ।
नामाज्झलादकटबाद्गजभुक्तशेषं
ज्ञात्वोभयोरधिकशेषमृणं धनं स्यात् ।

[1] साधको—अ, भ.
[2] अयं खण्डः (श्री) कोश एवोपलभ्यते.

अस्यार्थः—साध्यवर्णान् स्वरव्यञ्जनरूपेण पृथक् पृथक् तान् षट्कलाद्यङ्कैः गणितान् तथा साधकनामाक्षरान् युग्माद्यङ्कैः गणयित्वा, अष्टसङ्ख्याभिः हृत्वा उभयोश्च साध्यसाधकयोः अधिकं ऋणं शेषं धनं ज्ञात्वा मन्त्रं दद्यात् ॥

यदा मन्त्रश्चेदृणी भवति तदा मन्त्रः शुभदायको भवति ।
धनी चेन्मन्त्रे यद्यधिकाङ्कः स्यात् तदा मन्त्रं जपेत् सुधीः ॥
समेऽपि च जपेन्मन्त्रं न जपेत्तु ऋणाधिकम् ।
शून्ये मृत्युं विजानीयात् तस्माच्छून्यं परित्यजेत् ॥

रुद्रयामळे—

इन्द्वर्क्षनेत्ररविपञ्चदशर्तुवेद-
वह्न्यायुगाष्टनवभिर्गणितांश्च साध्यान् ।
दिग्मुर्गिरिः[?]श्रुतिगजाग्निमुनीषुवेद-
षड्वह्निभिस्तु गणितानथ साधकार्णान् ॥

नामाज्झलादित्यादिवचनं विष्णुविषयम्, रामार्चनचन्द्रिकोद्धृतत्वात् इति केचित् । वस्तुतस्तु—पूर्वस्यैव विचारणं हृतशेषं इन्द्वर्क्षर[?]मित्यादिनामाक्षरमारभ्य यावत् साधकाक्षरं भवेत् तावत्सङ्ख्यं सप्तगुणं कृत्वा त्रिभिः हरेत् । यद्वा—

साध्यनामाद्विगुणितं साधकेन समन्वितम् ।
अष्टभिश्च हरेच्छेषं तदन्यद्विपरीतकम् ॥

अस्यार्थः—साध्यनामाद्विगुणितं साधकाक्षरसमन्वितम् । अष्टभिश्च हरेत्तदन्यत् । साधकनामानं स्वरव्यञ्जनभेदेन द्विगुणीकृत्य साध्येन युक्तं कृत्वा अष्टभिः हरेत् ॥ इति ऋणिधनिचक्रम् ॥ [1]इति कुलाकुलचक्रविचारः ॥

## कुलाकुलचक्रविचारापवादः

अथ तदपवादः—कुलार्णवसोमसिद्धान्तरत्नसागररुद्रयामळकुलमूलावतारागस्त्यसंहितासिद्धान्तशेखरादिवचनगतोऽपुनरुक्तः संगृह्यते—

एकाक्षरे तथा कूटे त्रैपुरे स्त्रीसमर्पिते ।
स्वप्नलब्धे नृसिंहार्कवराहाणां मनुष्वपि ॥

[1] अत्रमूले कुलाकुलचक्रविचारो लिखित इतिभाति । तथापि लेखकप्रमादाद्गलितः । अतोऽन्यतोन्वेष्यलिखितः परि० ३ये.

प्रासादे प्रणवे तद्वत् सपिण्डाक्षरमन्त्रके ।
मृत्युञ्जये च पाशाद्ये वैष्णवे चण्डनायके ॥
व्योमव्यापिनि मायायां मालामन्त्रेष्वघोरके ।
एकत्रिपञ्चषट्सप्तेभाङ्करुद्राक्षरेषु च ॥
नपुंसके च दन्तार्णे काळिकाश्यामळामनौ ।
सिद्धकाळीचण्डिकयोः मन्त्रे राममनुष्वपि ॥
गोपालमातृकामन्त्रे हरवल्लभया सह ।
श्रीविद्या सिद्धविद्या च मातङ्गी भुवनेश्वरी ॥
पद्मावती मधुमती दत्तात्रेयश्च पार्वती ।
मित्रेशोड्डीशषष्ठीशचर्यानन्दमनुष्वपि ॥
सप्तप्रणवमन्त्राणां हरिद्रोच्छिष्टयोरपि ।
आसुरी सुमुखी चैव रेणुका च सरस्वती ॥
कुम्भोद्भवाणवश्चैव मतङ्गगणिकस्य च ।
शाबराणां च मन्त्राणां वृद्धजप्तमनुष्वपि ॥
कुलागतानां मन्त्राणां सिद्धारीन्नैव शोधयेत् ।
बहुरूपाह्वये मन्त्रे जैनबौद्धमनुष्वपि ॥
सिद्धारित्वादि धनितामृणितां च न शोधयेत् ॥

कू टे कूटाक्षरे मन्त्रे । स्त्री स म र्पि ते स्त्रीविशेषसमर्पिते इत्यर्थः । तथा च तन्त्रान्तरे—

साध्वी चैव सदाचारा गुरुभक्ता जितेन्द्रिया ।
सर्वमन्त्रार्थतत्त्वज्ञा सुशीला पूजने रता ।
गुरुयोग्या भवेत् सा हि विधवापरिवर्जिता ।
स्त्रियो दीक्षा शुभा प्रोक्ता मातुश्चाष्टगुणा स्मृता ॥ इति ॥

स्व प्न ल ब्ध इत्यत्र च कर्तव्यताविशेषो यथा—

स्वप्नलब्धे तु कलशे गुरोः प्राणं निवेश्य च ।
वटपत्रे कुङ्कुमेन लिखित्वा ग्रहणं शुभम् ।
ततः शुद्धिमवाप्नोति ह्यन्यथा विफलं भवेत् ॥ इति ॥

इदं तु सद्गुरोरभावे । तत्संभवे तु तत एव गृह्णीयात् इति । प्रासादे प्रासादबीजाद्ये । पाशः पाशबीजम् । व्योमं व्यापिनि हकारादौ । मायायां ह्रल्लेखायाम् । अङ्के नवाक्षरे । दन्तार्णे द्वात्रिंशदक्षरे । हरिद्रोच्छिष्टयोः तत्तद्गणपत्योः । अणुः मन्त्र इति । केषांचिन्मन्त्राणां शापाभाव उक्तो वातुलागमे—

पुरा शापविहीनं च वर्तते मन्त्रपञ्चकम् ।
श्रीविद्यासाळुवं मन्त्रं नृसिंहार्कवराहकम् ॥ इति ॥

तन्त्रान्तरे तु—

मन्त्रादिषु च सर्वेषु ह्रल्लेखाकामबीजकम् ॥ इति ॥
श्रीबीजं वा विनिक्षिप्य जपेन्मन्त्रस्य सिद्धये ।
तारसम्पुटितो वाऽपि दुष्टमन्त्रोऽपि सिध्यति ॥ इति ॥

हिरण्यगर्भसंहितायाम्—

स्वनामादिवर्णैः स्वमित्राक्षरैर्वा
मनुं सम्पुटीकृत्य येऽनुस्मरन्ति ॥

स मन्त्रस्तेषां सिध्यतीति शेषः । अनुस्मरणं जपः । तन्त्रान्तरे तु—

यत्र यस्य भवेत् भक्तिविशेषः स मनूत्तमः ।
वैरिकोष्ठमनुप्राप्तः सिद्धिदस्तस्य जायते ॥
गुरोरनुज्ञामात्रेण दुष्टमन्त्रोऽपि सिध्यति ।
गुरुं विलङ्घ्य शास्त्रेऽस्मिन्नाधिकारः सुरेश्वरि ॥ इति ॥

अथापि रिपोरनुकूलेन मन्त्रेण अभिचारादौ क्रियमाणे साधकस्यैवानिष्टापत्त्या सिद्धार्यादिविचारः कर्तव्य इति तन्त्रराजमतम् । वस्तुतस्तु—

नित्यनैमित्तिकान्मुक्तिः काम्यादैहिकमेव हि ।
प्रयोगात् परलोकस्य हानिरेव तु जायते ॥

इति वचनात् नित्यनैमित्तिकमात्रपरो भवेत् इत्युचितमिति दिक् ॥

१ एतन्नाम्नि मंत्रे ईशानपद्धतादावुक्ते । इति संपादकः ।

### मन्त्राणां संस्काराः

छिन्नत्वादिकपञ्चाशद्दोषशान्त्यै निरूप्यते ।
संस्कारदशकं सप्तकोटिमन्त्रगणे क्रमात् ॥
जननं जीवनं पश्चात् ताडनं बोधनं तथा ।
अथाभिषेको विमलीकरणाप्यायने पुनः ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥

१ जननं यथा—

भूर्जपत्रे लिखेत् सम्यक् त्रिकोणं रोचनादिभिः ।
वारुणं कोणमारभ्य सप्तधा विभजेत् समम् ॥
एवमीशाग्निकोणाभ्यां जायन्ते तत्र योनयः ।
नववेदमितास्तत्र विलिखेन्मातृकाः क्रमात् ॥
अकारादिहकारान्तामीशादिवरुणावधि ।
देवीं तत्र समावाह्य पूजयेच्चन्दनादिभिः ॥
ततः समुद्धरेन्मन्त्रं जननं तदुदीरितम् ॥

२ दीपनं यथा—

जपो[1]हंसपुटस्यास्य सहस्रं दीपनं स्मृतम् ॥
( हंसः+मन्त्रः+सोऽहम् ॥)

३ बोधनं यथा—

नभोवह्नीन्दुयुक्तार्घी सम्पुटस्य जपो मनोः ।
सहस्रपञ्चकमितो बोधनं तत् स्मृतं बुधैः ॥
(ह्रूं+मन्त्र+ह्रूम् ॥)

४ ताडनं यथा—

सहस्रं प्रजपेदस्त्रपुटितं ताडनं तु तत् ॥
(फट्+मन्त्रः+फट् ॥)

[1] हंसंपु—ब२, ब३, श्री.

अभिषेको यथा—

वाग्वंसतारैर्जप्तेन सहस्रं पाथसा मनुम् ।
अभिषिञ्चेत वागाद्यैरभिषेकोऽयमीरितः ॥
(ऐं हंसः ॐ इति ॥)

विमलीकरणं यथा—

हरिर्वह्न्यन्वितस्तारी वषडन्तो ध्रुवादिकः ।
सहस्रं तत्पुटं जप्याद्विमलीकरणं मनोः ॥
(ॐ त्रों वषट्+मन्त्रः+वषट् त्रों ॐ ॥)

जीवनं यथा—

स्वधावषट्पुटं जप्यात् सहस्रं जीवने मनुम् ॥
(स्वधा वषट्+मन्त्रः+वषट् स्वधा ॥)

तर्पणं तथा—

क्षीराज्ययुतपाथोभिस्तर्पणे तर्पयेन्मनुम् ॥

गोपनं यथा—

जपेन्मायापुटं मन्त्रं सहस्रं गोपनं हि तत् ॥
(ह्रीं+मन्त्रः+ह्रीम् ॥)

आप्यायनं यथा—

बालातार्तीयबीजेन गगनाद्येन सम्पुटम् ।
सहस्रं प्रजपेन्मन्त्रमेतदाप्यायनं मतम् ॥
(ह्सौः+मन्त्रः+ह्सौः)
संस्कारदशकं प्रोक्तं मनूनां दोषनाशकम् ॥

अस्यार्थः—विभजेत् तिर्यग्रेखाभिरित्यर्थः । एवं सप्तधा । तत्र पृथुत्रिकोणे योनयोऽल्पानि त्रिकोणानि । नववेदमिताः एकोनपञ्चाशत् । ईशादि ईशानकोणादि । वरुणावधि स्वाग्रवारुणकोणपर्यन्तम् । देवीं मातृकां देवतां स्वोपास्य-

मन्त्रदेवतां वा । चन्दनादिभिः—आदिशब्देन पुष्पादीनि गृह्यन्ते । पञ्चोपचारैः इत्यर्थः । समुद्धरेत् स्वोपास्यमन्त्रवर्णान् क्रमेण तत्तत्कोष्ठेभ्यो गृहीत्वा पत्रान्तरे लिखेदित्यर्थः । जननं जननाख्यसंस्कारः । एवमेव दीपनादयोऽपि । हंसपुटस्य आद्यन्तयोः हंसमन्त्रसम्पुटितस्य । अस्य स्वोपास्यमन्त्रस्य । नभो हकारः, वह्निः रकारः, इन्दुः बिन्दुः, तैर्युक्तोऽर्घी ऊकारः, तेन हूं एतेन सम्पुटितस्य मन्त्रस्य सहस्रपञ्चकजपेन बोधनमित्युक्तम् । अस्त्रं फट्कारं, तत्पुटितेन मन्त्रेण सहस्रजप्तेन ताडनमित्युक्तम् । वागिति ऐं हंसः ओं इति त्रिभिरभिषिञ्चेत् । पत्रान्तरे लिखितं मनुं कुशाग्रतोयबिन्दुभिः प्रोक्षयेदित्यर्थः । हरिः तकारः, वह्न्यन्वितो रकारयुतः, तारी प्रणवयुतः, त्रोम् । ध्रुवस्तारः तदादिकः ॐ त्रों वषट् । तत्पुटं एभिः सम्पुटितम् । माया ह्रींकारः । बालातृतीयबीजं सौः, गगनं ह, ह्सौरित्यनेन । शेषं सुगममिति । तन्त्रसारादिषु तु संस्काराणां प्रयोगभेदोऽपि दृश्यते । एतेषां संस्काराणां सकृदेवानुष्ठानम्, नत्वभ्यासः इति दिक् ॥

## पुष्पविचारः

अथ प्राक्चिकीर्षितः पुष्पविचारः—

पुष्पाणि तावत् पञ्चधा—परं अपरं उत्तमं मध्यमं अधमं चेति । मणिरत्न-सुवर्णादिनिर्मितं कुसुमं परं, तच्च न कदाचिन्निर्माल्यम् । चित्रवसनादिकर्तनजं अपरम्, तच्च प्रतिदिनप्रोक्षणेन शुध्येत् । उत्तमं वृक्षभवं, तच्च प्रातरपचितं तत्सन्ध्यात्रितयावधि न निर्माल्यम् । मध्यमं फलरूपम् । अधमं पत्रजलरूपम् । एते च तत्तत्काल एवार्पणार्हे इति प्रयोगपारिजाते नारदः ॥

## देवतायोग्यानि पुष्पादीनि

भविष्यपुराणे—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिच्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वाऽपि भक्त्या सम्पूजयेत् सुरान् ॥

विष्णुधर्मोत्तरे—

धर्मार्जितधनक्रीतैः यः कुर्याद्देवतार्चनम् ।
उद्धरिष्यत्यसन्देहात् सप्त पूर्वान् तथा परान् ॥

इति विप्रातिरिक्तविषयम्,

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

इति भविष्योक्तेः । अयं च निषेधो ब्राह्मणस्य नित्यार्चन एव, न तु नैमित्तिके काम्ये च ॥

लक्षपुष्पार्चनादौ तु क्रयक्रीतमपीष्यते ।

इति मन्त्रकोशकारोक्तेः । परोपवनादेः चौर्येणापि कुसुममादेयम् ॥

देवतार्थे च कुसुममस्तेयं मनुरब्रवीत् ॥

इति वचनात् । याचितपुष्पार्चनस्य वराहपुराणे अपराधेषु गणितत्वाच्च याचनमपि जलोपान्त एव निषिद्धम्, तीरादन्यत्र याचने तु न दोष इति प्रयोगपारिजातोक्तेः । तत्रैव स्वजात्याहृतं पुष्पं द्रव्येण आत्मीयं कृत्वा पूजयेदिति । अनेन विप्रस्यापि क्रयक्रीतार्चनाभ्यनुज्ञा दृष्टा ॥

## वर्जनीयानि

क्रिमिकीटावपन्नानि शीर्णपर्युषितानि च ।
स्वयं पतितपुष्पाणि त्यजेदुपहतानि च ॥

उपहतिस्तु मलादिना ।

निर्गन्धं केशकीटादिदूषितं चोग्रगन्धकम् ।
मलिनं तुच्छसंस्पृष्टमाघ्रातं स्वविकासितम् ॥
अशुद्धभाजनानीतं स्नात्वा नीतं च याचितम् ॥

स्नात्वेति मध्याह्नस्नानोत्तरमानयने निषेधः । निर्गन्धेष्वपि केषां चिदुपादानमुक्तं स्वच्छन्दसारे—

निर्गन्धपुष्पजातीषु पलाशकुसुमैरपि ।
जपाबन्धूकपुष्पैश्च मन्दारैरपि पूजयेत् ॥ इति ॥

पुष्पसारसुधानिधौ—

पुष्पं वस्त्रे न बध्नीयात् शिरसा न वहेद्बुधः ।
नयेत् पत्रपुटेनैव पाणिनाऽऽलम्ब्य वाग्यतः ।

आश्वलायनः—

नाग्निना सह पुष्पं वा जलं चान्नं न चानयेत् ।
जलाग्निगन्धपुष्पान्नं न मूर्ध्नाऽसेन वाहयेत् ॥

ग्रन्थान्तरे—

देहोपरि धृतं यच्चाप्यधोवस्त्रधृतं च यत् ।
वामहस्ते धृतं यच्च जलेन क्षाळितं च यत् ॥
देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम् ।
समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत् ॥
तद्धारी चैव नान्यान् हि निर्माल्यं तत् भवेत्तयोः ।
शुष्कं पर्युषितं कृष्णं भूमिगं नार्पयेत् सुमम् ॥
चम्पकं कमलं त्यक्त्वा कलिकामपि वर्जयेत् ॥ इति ॥

## सर्वदेवतासाधारणानि विहितानि च

भविष्यपुराणे—

जातीशमीकुशाः कङ्कुमल्लिकाकरवीरजम् ।
नागपुन्नागकाशोकरक्तनीलोत्पलानि च ॥
चम्पकं वकुळं चैव पद्मं बिल्वं पवित्रकम् ।
एतानि सर्वदेवानां विहितानि समानि च ॥

कङ्कु कुटजकम् । दुर्गाया विहितानि देवीपुराणे—

ऋतुकालोद्भवैः पुष्पैः मल्लिकाजातिपुष्पकैः ।
किंशुकैश्चम्पकैश्चैव [1]किंकरातैश्च पाटलैः ॥
वकुळैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः ।
करवीरार्कपुष्पैश्च शिंशुपैश्चापराजितैः ॥
सितै रक्तैस्तथा पीतैः कृष्णैश्चैव चतुर्विधैः ।
सितरक्तैस्तथा पुष्पैः पद्मैश्चापाण्डुरैस्तथा ॥
दमनैः सिन्दुवारैश्च सुरभिमरुवकैस्तथा ।
मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः ॥
रक्तान्वितैस्तथा सर्वैः जलजैः स्थलसम्भवैः ।
पत्रपुष्पैर्यथान्यायं सर्वौषधिमयैः शुभैः ॥
धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत् ॥ इति ॥

रक्तो रक्तवर्णः । बिल्वपत्रैः पूजने राजसूयफलम् । करवीरस्रजा अग्निष्टोमफलम् । वकुळस्रजा वाजपेयफलम् इति प्रयोगपारिजाते पुष्पसारसुधानिधौ च ।

शिवार्चने निषिद्धानि पत्रपुष्पफलानि च ।
तानि देव्याः प्रशस्तानि अनुक्तानि विशेषतः ॥

इति ताराभक्तिसुधाऽर्णवे । रुद्रयामळशाक्तियामळयोः—

सुन्दरीभैरवीकाळीताराब्रह्मविवस्वताम् ।
विना तुळस्या या पूजा सा पूर्णा न कदाचन ॥
सावित्रीं च भवानीं च दुर्गादेवीं सरस्वतीम् ।
योऽर्चयेत् तुळसीपत्रैः सर्वैः कामैः स ऋध्यति ॥ इति ॥

"बिल्वैर्वा तुळसीपुष्पैः" इति रहस्यनामसाहस्रे ललितार्चने स्मर्यते ॥

**केषांचित्कालावधिः**

तत्र हेमाद्रौ—

पङ्कजं पञ्चरात्रं स्याद्दशरात्रं तु बिल्वकम् ।
तुळस्येकादशाहं तु पुनः प्रक्षाळ्य पूजयेत् ॥

[1]किंकिरा—अ, ब१, ब२.
१ °शपै इति 'न'

बोपदेवः—

बिल्वापामार्गजातीतुळसिशमिशताकेतकीभृङ्गदूर्वा-

कुंदांभोजाहिदर्भा मुनितिलतगरा ब्रह्मकल्हारमल्लः ।

चम्पा चारातिकुम्भी दमनमरुवका बिल्वतोहानि शस्ताः

त्रिंशस्त्र्यङ्कार्यरीशोदधिनिधिवसुभू भूयसा भूय एवम् ॥

त्रिंशादयो बिल्वप्रभृतीनां दिनसङ्ख्यावाचकाः । मुहुरावर्त्त्याश्च ॥

## विहितनिषिद्धानि

पाटला च शमीपत्रं दुर्गायास्तु हिताहितम् ॥

विहितनिषिद्धमित्यर्थः ॥

तिलकं मालती बाणस्तुळसी भृङ्गराजकम् ।

तमालं शिवदुर्गार्थे निषिद्धविहितं भवेत् ॥

बाणो भाषया करसाला ॥

जयः काशः श्वेतपद्मं श्वेतमन्दारकं तथा ।

दुर्गायाश्चैव विष्णोश्च निषिद्धविहितं भवेत् ॥

जयः जयन्ती ॥

अगस्तिरतिमुक्तं च तिरीटं च हरे हरौ ।

अपामार्गस्य पुष्पं च दुर्गायाश्च हिताहितम् ॥

अतिमुक्तो माधवीलता । तिरीटं लोध्रम् ॥

## निषिद्धानि

अक्षतानर्कधुत्तूरौ विष्णोर्नैवार्पयेत् सुधीः ॥

अक्षतनिषेधः सालग्रामपर एव न तु मूर्त्यामिति हेमाद्रिः ॥

बन्धूकं केतकी कुन्दं केसरं कुटजं जपाम् ।

शङ्करे नार्पयेत् विद्वान् मालतीं यूथिकामपि ॥

शक्तौ दूर्वार्कमन्दारान् माल्रूरं तगरं रवौ ।
विनायके तु तुळसीं नार्पयेत् जातुचिद्बुधः ॥

इहार्कनिषेधो दुर्गेतरविषयः, विहितेषु तस्याप्युपादानात् ॥

**मध्यमं फलरूपं कुसुमम्**

जम्बूदाडिमजम्भीरचिञ्चिणीबीजपूरकाः ।
रम्भा धात्री च बदरी रसालः पनसोऽपि च ॥
एषां फलैर्यजेद्देवं . . . . . . . . . . . . . ॥

देवमित्युपलक्षणं देव्या अपि ॥

**अधमम्**

तुळसी वकुळो वृक्षः चम्पकश्च सरोजिनी ।
बिल्वकल्हारदमनास्तथा मरुवकं कुशः ॥
दूर्वाहिवल्ल्यपामार्गा विष्णुक्रान्ता मुनिद्रुमः ।
धात्रीयुतानामेतेषां पत्रैः कुर्यात् सुरार्चनम् ॥

इह तुळस्यादीनां पूर्वोक्तानां केषां चित् वकुळादिपत्रप्रायपाठेऽपि नाधमत्वम् । पत्रैरित्युपलक्षणं फलस्यापि ॥

**पर्युषितकुसुमविचारः**

भविष्यत्पुराणे—

न पर्युषितदोषोऽस्ति जलजोत्पलचम्पके ।
तुळस्यगस्त्यवकुळे बिल्वे गङ्गाजले तथा ॥

अन्यत्र—

तुळस्यां बिल्वपत्रे च जलजेषु च सर्वशः ।
न पर्युषितदोषोऽस्ति मालाकारगृहेषु च ॥ इति ॥

**पर्युषितापवादः**

पारिजाते—

जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।
तुळस्यगस्त्यबिल्वानि गाङ्गं वारि न दुष्यति ॥ इति ॥

स्कान्दे—

तस्य माला भगवतः परमप्रीतिकारिणी ।

शुष्का पर्युषिता वाऽपि न दुष्टा भवति क्वचित् ॥

तस्येत्युपक्रमात् दमनकस्य । भगवत इत्युपलक्षणं भगवत्या अपि ॥

### पर्युषितमात्रस्यापि ग्राह्यत्वम्

प्रयोगपारिजाते—

यद्वा पर्युषितैश्चापि पुष्पाद्यैरविकारिभिः ।

गन्धोदकेन चैतानि त्रिः प्रोक्ष्यैव प्रपूजयेत् ॥ इति ॥

अथवा बिल्वतुळसीपत्रैर्वकुळपुष्पकैः ।

शुष्कैरपि पूजयेत् . . . . . . . . . ॥ इति ॥

### सर्वस्यैतस्यापवादः

ग्रन्थान्तरे—

देवीपूजा सदा कार्या जलजैः स्थलजैरपि ।

विहितैर्वा निषिद्धैर्वा भक्तियुक्तेन चेतसा

सर्वपुष्पैः सदा पूजा विहिताविहितैरपि ।

कर्तव्या सर्वदेवानां भक्तिरेवात्र कारणम् ॥ इति ॥

इतोऽपि विस्तारोऽन्यत्र द्रष्टव्यः इति दिक् ॥

### निबन्धाध्ययनमहिमा

एतन्निबन्धाध्ययनेनापि सर्वदेवतोपास्तिफलं भवति । तदुक्तं भगवता सूत्रकृता—

य इमां दशखण्डीं महोपनिषदं महात्रैपुरसिद्धान्तसर्वस्वभूतामधीते स सर्वेषु यज्ञेषु यष्टा भवति । यं यं क्रतुमधीते तेन तेनास्येष्टं भवति इतीह श्रूयते इत्युपनिषदिति शिवम् ॥ इति ॥

अत्राधीते इत्यध्ययनविधेः अर्थज्ञानभाव्यकतया अस्य निबन्धस्य खण्डदशकार्थावगमकत्वात् इति शिवम् ॥

ग्रन्थकर्तृप्रशस्तिः

नित्योत्सवो निबद्धोऽयं यथाधीविभवं मया ।
भ्रमप्रमादस्खलितं समादधतु तद्विदः ॥
अनेन वागध्वरेण समाराध्या कथंचन ।
प्रीयतां देशिकात्मा मे देवी श्रीललिताऽम्बिका ॥
विश्वाश्चर्यतपोमयविश्वामित्रर्षिगोत्रतिलकेन ।
श्रीबालकृष्णविद्वत्सुतेन लक्ष्म्यम्बयोपलाल्येन ॥
श्रुतपेटवोपनाम्ना चोळाधिपभोसलेन्दुमान्येन ।
नाटककाव्यादिकृता महितमहाराष्ट्रजातिहीरेण ॥
त्र्यन्ततत्त्वशीलनदळित[1]जगच्छत्र[च्छास्त्र]जालमोहेन
भारत्युपाख्यभास्करमखिदेशिकलब्धदैक्षनाम्नायम् ॥
आम्नायतन्त्रजालालोकपरेणार्यसम्प्रदायजुषा ।
ललितापदाब्जरोलम्बेन जगन्नाथपण्डितवरेण ॥
कल्यब्देषु रसार्णवकरिवेदमितेष्विह व्यतीतेषु ।
नव्यः क्रोधनशरदि न्यबन्धि नित्योत्सवः शिवप्रीत्यै ॥

इति श्रीमद्भासुरानन्दनाथचरणारविन्दमिलिन्दायमानमानसेन उमानन्दनाथेन निर्मिते अभिनवे कल्पसूत्रानुसारिणि नित्योत्सवनिबन्धे साधारणक्रमनिरूपणो नाम अनवस्थोल्लासः सप्तमः समाप्तिमगमत् ॥

इति नित्योत्सवनिबन्धः समाप्तः

श्रीगुरुचरणारविन्दार्पणमस्तु

---

[1] जगच्छक्र—ब२, ब३; जगच्छाक्ति—अ१; जगज्जाकृच्छमूहेन—भ.

## नित्योत्सवोदाहृतग्रन्थग्रन्थकारसूची

# परिशिष्टम्

अथ रक्तशुक्लविद्यामंत्रौ ( पत्र ९, पंक्ति २२ )

**रक्तविद्यामंत्रः**—ओं ऐं ह्रीं श्रीं स्हौः स्हौः रक्तविद्यामहापीठरक्तपुष्परक्तमंडलमहापीठरक्तरूप-रक्तमंत्रमहापीठरक्तदीपरक्तमुद्रामहापीठरक्तनातिमहाप्रकाशिनी परांबा स्हौः स्हौः ह स क ह ल ह्रीं रक्तचरणविद्याश्रीपादुकां पूजयामि ॥

**शुक्लविद्यामंत्रः**—ओं ऐं ह्रीं श्रीं ह्स्रौः ह्स्रौः शुक्लविद्यामहापीठशुक्लपुष्पशुक्लमंडलमहापीठ-शुक्लरूपशुक्लमंत्रमहापीठशुक्लदीपशुक्लमुद्रामहापीठशुक्लनतिमहाप्रकाशानन्दनाथ ह्स्रौः ह्स्रौः ह स क ल ह्रीं शुक्लचरणविद्याश्रीपादुकां पूजयामि ॥

**अथ तत्त्वमंत्राः**—( पत्र ११, पंक्ति १४ ) ओं ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ऐं क ए ई ल ह्रीं आत्मतत्त्वं आणवमलं स्थूलदेहं शोधयामि जुहोमि स्वाहा ॥ ब्रह्मण इदं न मम ॥ १ ॥ ओं ऐं ह्रीं श्रीं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं क्लीं ह स क ह ल ह्रीं विद्यातत्त्वं कार्मणमलं सूक्ष्मदेहं शोधयामि जुहोमि स्वाहा ॥ मुकुंदायेदं न मम ॥ २ ॥ ओं ऐं ह्रीं श्रीं यं रं लं वं शं षं सं हं ळं क्षं सौः स क ल ह्रीं शिवतत्त्वं मायिकमलं कारणदेहं शोधयामि जुहोमि स्वाहा ॥ पशुपतय इदं न मम ॥ ३ ॥

**अथ बालामंत्रः**—( पत्र १२, पंक्ति १६ ) ऐं क्लीं सौः ॥ त्र्यक्षरः ॥

**अथ महाविद्येश्वरीमंत्रः**—( पत्र ५६, पंक्ति १५ ) आं ह्रीं फ्रें सः नित्यक्लिन्ने मदद्रवे स्वाहा ॥ चतुर्दशाक्षरः ॥

**अथ कामेश्वरकामेश्वर्योरायुधमंत्राः** ॥ ( पत्र ६९, पंक्ति ५ )

**कामेश्वरायुधमंत्राः**—

बाणमंत्रः । यां रां लां वां शां सर्वजृंभणेभ्यो बाणेभ्यो नमः ॥

धनुर्मंत्रः । धं सर्वसंमोहनाय धनुषे नमः ॥

पाशमंत्रः । आं सर्ववशीकरणाय पाशाय नमः ॥

अंकुशमंत्रः । क्रों सर्वस्तंभनायांकुशाय नमः ॥

कामेश्वर्यायुधमंत्रास्तूक्ता पृ. ६८, पं. १९

॥ महाषोढान्यासः ॥ ( पत्र १०९, पंक्ति १७ )

श्रीगुरुभ्यो नमः ॥ अस्य श्रीमहाषोढान्यासस्य । ब्रह्मा ऋषिः । जगती छंदः । श्रीमदर्द्धनारीश्वरो देवता । श्रीविद्यांगत्वेन न्यासे विनियोगः ॥ इति ऋष्यादिकं स्मृत्वा मूर्द्धादिषु विन्यस्य अङ्गन्यासं कुर्यात् ॥ अंगन्यासस्तु अंगुलीदेहवक्त्रात्मकः ॥ तत्रादावंगुलिन्यासः ॥

तत्र अंगुष्ठयोः । ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः हौं ईशानाय नमः ॥
तर्जन्योः । ४ ह्सौः ह्सौः हैं तत्पुरुषाय नमः ॥
मध्यमयोः । ४ ह्सौः ह्सौः हुं अघोराय नमः ॥
अनामिकयोः । ४ ह्सौः ह्सौः हिं वामदेवाय नमः ॥
कनिष्ठयोः । ४ ह्सौः ह्सौः हं सद्योजाताय नमः ॥
मूर्ध्नि ओं ५ हौं ईशानाय नमः ॥
मुखे ओं ५ हैं तत्पुरुषाय नमः ॥
हृदये ओं ५ हुं अघोराय नमः ॥
गुह्ये ओं ५ हिं वामदेवाय नमः ॥
पादयोः ओं ५ हं सद्योजाताय नमः ॥
मूर्ध्नि ओं ५ हौं ईशानायोर्ध्ववक्त्राय नमः ॥
मुखे ओं ५ हैं तत्पुरुषाय पूर्ववक्त्राय नमः ॥
दक्षिणकर्णे ओं ५ हुं अघोराय दक्षिणवक्त्राय नमः ॥
वामकर्णे ओं ५ हिं वामदेवायोत्तरवक्त्राय नमः ॥
चोरकूपे ओं ५ हं सद्योजाताय पश्चिमवक्त्राय नमः ॥

इति अंगन्यासः ॥ अयं पंचवक्त्रन्यासः क्रमेणांगुष्ठादिपंचांगुलीभिरेकैकांगुलिनैकैकवक्त्रे न्यस्तव्यः ॥ इति अंगन्यासं विधाय ततो ह्सां ह्सीं इत्यादिभिः करषडंगन्यासं कृत्वा वक्ष्यमाणरूपं देवं हृदये ध्यात्वा न्यसेत् ॥

ओघप्रकारान्तरेण ध्यानम्—

पंचवक्त्रं चतुर्बाहुं सर्वाभरणभूषितम् ।
चंद्रसूर्यसहस्राभं शिवशक्त्यात्मकं भजे ॥

पट ८ ऊर्ध्वतंत्रे ।

तत्रादौ प्रपंचन्यासः । स यथा—

ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः अं प्रपंचरूपायै श्रियै नमः ॥
ओं ५ आं द्वीपरूपायै मायायै नमः ॥ ( एवं सर्वत्र )

६ इं जलधिरूपायै कमलायै नमः ॥
६ ईं गिरिरूपायै विष्णुवल्लभायै नमः ॥
६ उं पत्तनरूपायै पद्मधारिण्यै नमः ॥
६ ऊं पीठरूपायै समुद्रतनयायै नमः ॥
६ ऋं क्षेत्ररूपायै लोकमात्रे नमः ॥
६ ॠं वनरूपायै कमलवासिन्यै नमः ॥
६ ऌं आश्रमरूपायै इंदिरायै नमः ॥
६ ॡं गुहारूपायै मायायै नमः ॥
६ एं नदीरूपायै रमायै नमः
६ ऐं चत्वररूपायै पद्मायै नमः ॥
६ ओं उद्भिज्जरूपायै नारायणप्रियायै नमः ॥
६ औं स्वेदजरूपायै सिद्धलक्ष्म्यै नमः ॥
६ अं अण्डजरूपायै राजलक्ष्म्यै नमः ॥
६ अः जरायुजरूपायै महालक्ष्म्यै नमः ॥
६ कं लवरूपायै आर्यायै नमः ॥
६ खं तृप्तिरूपायै उमायै नमः ॥
६ गं कलारूपायै चंडिकायै नमः ॥
६ घं काष्ठारूपायै दुर्गायै नमः ॥
६ ङं निमेषरूपायै शिवायै नमः ॥
६ चं श्वासरूपायै अपर्णायै नमः
६ छं घटिकारूपायै अंबिकायै नमः ॥
६ जं मुहूर्त्तरूपायै सत्यै नमः ॥
६ झं प्रहररूपायै ईश्वर्यै नमः ॥
६ ञं दिवसरूपायै शांभव्यै नमः
६ टं संध्यारूपायै ईशान्यै नमः ॥
६ ठं रात्रिरूपायै पार्वत्यै नमः ॥
६ डं तिथिरूपायै सर्वमंगलायै नमः ॥
६ ढं वाररूपायै दाक्षायण्यै नमः ॥
६ णं नक्षत्ररूपायै हैमवत्यै नमः ॥
६ तं योगरूपायै महामायायै नमः ॥
६ थं करणरूपायै महेश्वर्यै नमः ॥
६ दं पक्षरूपायै मृडान्यै नमः ॥

६ धं मासरूपायै रुद्राण्यै नमः ॥
६ नं राशिरूपायै शर्वाण्यै नमः ॥
६ पं ऋतुरूपायै परमेश्वर्यै नमः ॥
६ फं अयनरूपायै काल्यै नमः ॥
६ बं वत्सररूपायै कात्यायन्यै नमः ॥
६ भं युगरूपायै गौर्यै नमः ॥
६ मं प्रलयरूपायै भवान्यै नमः ॥
६ यं पंचभूतरूपायै ब्राह्म्यै नमः ॥
६ रं पंचतन्मात्ररूपायै वागीश्वर्यै नमः ॥
६ लं पंचकर्मेन्द्रियरूपायै वाण्यै नमः ॥
६ वं पंचज्ञानेन्द्रियरूपायै सावित्र्यै नमः ॥
६ शं पंचप्राणरूपायै सरस्वत्यै नमः ॥
६ षं गुणत्रयरूपायै गायत्र्यै नमः ॥
६ सं अंतःकरणचतुष्टयरूपायै वाक्प्रदायै नमः ॥
६ हं अवस्थाचतुष्टयरूपायै शारदायै नमः ॥
६ ळं सप्तधातुरूपायै भारत्यै नमः ॥
ओं ऐं ह्रीं श्रीं ह्स्रौंः हसौः क्षं दोषत्रयरूपायै विद्यात्मिकायै नमः ॥

इत्येकपंचाशच्छक्तीर्मातृकास्थानेषु विन्यस्य ॥ ततः ओं ऐं ह्रीं श्रीं ह्स्रौंः ह्सौः अकारादि-क्षकारांतां मातृकामुच्चार्य सकलप्रपंचाधिदेवतायै श्रीपरांबादेव्यै नमः ह्सौः ह्स्रौंः श्रीं ह्रीं ऐं ओं सर्वांगे व्यापकं कुर्यात् ॥ इति प्रपंचन्यासः ॥

## ॥ अथ भुवनन्यासः ॥

तत्र–पादयोः ओं ऐं ह्रीं श्रीं ह्स्रौंः ह्सौः अं आं इं अतललोकनिलयशतकोटिगुह्याद्ययोगिनी मूलदेवतायुताधारशक्त्यम्बादेव्यै नमः ॥

गुल्फयोः ६ ईं उं ऊं वितललोकनिलयशतकोटिगुह्यतरानन्तयोगिनीमूलदेवतायुताधारशक्त्यम्बा-देव्यै नमः ॥

जंघयोः ६ ऋं ॠं लृं सुतललोकनिलयशतकोटिअतिगुह्याचिन्त्ययोगिनीमूलदेवतायुता० ॥
जान्वोः ६ ॡं एं ऐं महातललोकनिलयशतकोटिमहागुह्यस्वतन्त्रयोगिनीमूलदेवतायुता० ॥
ऊर्वोः ६ ओं औं तलातललोकनिलयशतकोटिपरमगुह्येच्छायोगिनीमूलदेवतायुता० ॥
स्फिचोः ६ अं अः रसातललोकनिलयशतकोटिरहस्यज्ञानयोगिनीमूलदेवतायुता० ॥
मूलाधारे ६ कं खं गं घं ङं पाताललोकनिलयशतकोटिरहस्यतरक्रियायोगिनीमूलदेवतायुता० ॥

स्वाधिष्ठाने ६ चं छं जं झं ञं भूर्लोकनिलयशतकोटिअतिरहस्यडाकिनीयोगिनीमूलदेवतायुता० ॥

मणिपूरके ६ टं ठं डं ढं णं भुवर्लोकनिलयतकोटिमहारहस्याकिनीयोगिनीमूलदेवतायुता० ॥

अनाहते ६ तं थं दं धं नं स्वर्लोकनिलयशतकोटिपरमरहस्यलाकिनीयोगिनीमूलदेवतायुता० ॥

विशुद्धौ ६ पं फं बं भं मं महर्लोकनिलयशतकोटिगुप्तकाकिनीयोगिनीमूलदेवतायुता० ॥

आज्ञायां ६ यं रं लं वं जनोलोकनिलयशतकोटिगुप्ततरसाकिनीयोगिनीमूलदेवतायुता० ॥

ललाटे ६ शं षं सं हं तपोलोकनिलयशतकोटिअतिगुप्तहाकिनीयोगिनीमूलदेवतायुता० ॥

ब्रह्मरंध्रे ६ ळं क्षं सत्यलोकनिलयशतकोटिमहागुप्तयाकिनीयोगिनीमूलदेवतायुताधारशक्त्यम्बादेव्यै नमः ॥ इति विन्यस्य ॥ ६ समस्तमातृकामुच्चार्य सकलभुवनाधिपायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौंः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ॥ इति भुवनन्यासः ॥

## ॥ अथ मूर्तिन्यासः ॥

तत्र—शिरसि ओं ऐं ह्रीं श्रीं ह्सौंः हसौः अं केशवायाक्षरशक्त्यै नमः ॥

मुखे ६ आं नारायणायाद्याशक्त्यै नमः ॥

दक्षिणांसे ६ इं माधवायेष्टदायै नमः ॥

वामांसे ६ ईं गोविन्दायेशान्यै नमः ॥

दक्षपार्श्वे ६ उं विष्णवे उग्रायै नमः ॥

वामपार्श्वे ६ ऊं मधुसूदनायोर्ध्वनयनायै नमः ॥

दक्षकट्यां ६ ऋं त्रिविक्रमाय ऋद्ध्यै नमः ॥

वामकट्यां ६ ॠं वामनाय रूपिण्यै नमः ॥

दक्षोरौ ६ लृं श्रीधराय लुप्तायै नमः ॥

वामोरौ ६ लॄं हृषीकेशाय लूनदोषायै नमः ॥

दक्षजानुनि ६ एं पद्मनाभायैकनायिकायै नमः ॥

वामजानुनि ६ ऐं दामोदरायैकारिण्यै नमः ॥

दक्षजंघायां ६ ओं वासुदेवायौघवत्यै नमः ॥

वामजंघायां ६ औं संकर्षणायौर्वेकामायै नमः ॥

दक्षपादे ६ अं प्रद्युम्नाय अञ्जनप्रभायै नमः ॥

वामपादे ६ अः अनिरुद्धायास्थिमालाधरायै नमः ॥

दक्षपादाग्रादूरुमूलपर्यन्तं ६ कं भं भवाय करभद्रायै नमः ॥
वामपादाग्रादूरुमूलपर्यन्तं ६ खं बं शर्वाय खगबलायै नमः ॥
दक्षपार्श्वे ६ गं फं रुद्राय गरिमफलप्रदायै नमः ॥
वामपार्श्वे ६ घं पं पशुपतये घोरपादायै नमः ॥
दक्षदोर्मूले ६ ङं नं उग्राय पंक्तिनासायै नमः ॥
वामदोर्मूले ६ चं धं महादेवाय चंद्रार्द्धधारिण्यै नमः ॥
कंठे ६ छं दं भीमाय छंदोमय्यै नमः ॥
वदने ६ जं थं ईशानाय जगत्स्थानायै नमः ॥
दक्षकर्णे ६ झं तं तत्पुरुषाय झंकृत्यै नमः ॥
वामकर्णे ६ ञं णं अघोराय ज्ञानदायै नमः ॥
भाले ६ टं ढं सद्योजाताय टंकढक्कधरायै नमः ॥
शिरसि ६ ठं डं वामदेवाय ठंकृतिडामर्यै नमः ॥
मूलाधारे ६ यं ब्रह्मणे यक्षिण्यै नमः ॥
स्वाधिष्ठाने ६ रं प्रजापतये रञ्जिन्यै नमः ॥
मणिपूरके ६ लं वेधसे लक्ष्म्यै नमः ॥
अनाहते ६ वं परमेष्ठिने वज्रिण्यै नमः ॥
विशुद्धौ ६ शं पितामहाय शशिधरायै नमः ॥
आज्ञायां ६ षं विधात्रे षडाधारालयायै नमः ॥
अर्द्धेन्दौ ६ सं विरिञ्चये सर्वनायिकायै नमः ॥
रोधिन्यां ६ हं स्रष्ट्रे हसिताननायै नमः ॥
नादे ६ ळं चतुराननाय ललितायै नमः
नादान्ते ६ क्षं हिरण्यगर्भाय क्षमायै नमः ॥ इति विन्यस्य ॥

ओं ऐं ह्रीं श्रीं ह्स्रौंः ह्स्रौः सकलमातृकामुचार्य सकलत्रिमूर्त्यात्मिकायै श्रीपराम्बादेव्यै नमः ह्सौः ह्स्रौंः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ॥ इति मूर्त्तिन्यासः ॥

॥ अथ मंत्रन्यासः ॥

मूलाधारे ओं ऐं ह्रीं श्रीं ह्स्रौंः ह्स्रौः अं आं इं एकलक्षकोटिभेदप्रणवाद्येकाक्षरात्मकाखिलमंत्राधिदेवतायै सकलफलप्रदायै एककूटेश्वर्यम्बादेव्यै नमः ॥

स्वाधिष्ठाने ६ ईं उं ऊं द्विलक्षकोटिभेदहंसादिद्व्यक्षरात्मकाखिलमंत्राधिदेवतायै सकलफलप्रदायै द्विकूटेश्वर्यम्बादेव्यै नमः ॥

मणिपूरके ६ ऋं ॠं लृं त्रिलक्षकोटिभेदवन्ह्यादित्र्यक्षरात्मकाखिलमंत्राधिदेवतायै सकलफलप्रदायै त्रिकूटेश्वर्यम्बादेव्यै नमः ॥

अनाहते ६ ॡं एं ऐं चतुर्लक्षकोटिभेदचंद्रादिचतुरक्षरात्मकाखिलमंत्राधिदेवतायै सकलफल-प्रदायै चतुष्कूटेश्वर्यम्बादेव्यै नमः ॥

विशुद्धौ ६ ओं औं अं अः पंचलक्षकोटिभेदसूर्यादिपंचाक्षरात्मकाखिलमंत्राधिदेवतायै० पंचकूटेश्वर्यम्बादेव्यै नमः ॥

आज्ञायां ६ कं खं गं षड्लक्षकोटिभेदस्कन्दादिषडक्षरात्मकाखिल० षट्कूटेश्वर्यम्बादेव्यै नमः ॥

बिंदौ ६ घं ङं चं सप्तलक्षकोटिभेदगणपत्यादिसप्ताक्षरात्मकाखिल० सप्तकूटेश्वर्यम्बादेव्यै नमः ॥

अर्द्धेन्दौ ६ छं जं झं अष्टलक्षकोटिभेदबटुकाद्यष्टाक्षरात्मकाखिल० अष्टकूटेश्वर्यम्बादेव्यै नमः ॥

रोधिन्यां ६ ञं टं ठं नवलक्षकोटिभेदब्रह्मादिनवाक्षरात्मकाखिल० नवकूटेश्वर्यम्बादेव्यै नमः ॥

नादे ६ डं ढं णं दशलक्षकोटिभेदविष्णवादिदशाक्षरात्मकाखिल० दशकूटेश्वर्यम्बादेव्यै नमः ॥

नादान्ते ६ तं थं दं एकादशलक्षकोटिभेदरुद्रायेकादशाक्षरात्मकाखिल० एकादशकूटेश्वर्यम्बा-देव्यै नमः ॥

शक्तौ ६ धं नं पं द्वादशलक्षकोटिभेदवाण्यादिद्वादशाक्षरात्मकाखिल० द्वादशकूटेश्वर्यम्बा-देव्यै नमः ॥

व्यापिकायां ६ फं बं भं त्रयोदशलक्षकोटिभेदलक्ष्म्यादित्रयोदशाक्षरात्मकाखिल० त्रयोदशकूटे-श्वर्यम्बादेव्यै नमः ॥

समनस्थाने ६ मं यं रं चतुर्दशलक्षकोटिभेदगौर्यादिचतुर्दशाक्षरात्मकाखिल० चतुर्दशकूटेश्वर्यम्बा-देव्यै नमः ॥

उन्मन्यां ६ लं वं शं पंचदशलक्षकोटिभेददुर्गादिपंचदशाक्षरात्मकाखिल० पंचदशकूटेश्वर्यम्बा-देव्यै नमः ॥

ध्रुवमंडले ६ षं सं हं ळं क्षं षोडशलक्षकोटिभेदत्रिपुरादिषोडशाक्षरात्मकाखिलमंत्राधिदेवतायै सकलफलप्रदायै षोडशकूटेश्वर्यम्बादेव्यै नमः ॥

ततः । ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः सकलमातृकामुच्चार्य सकलमंत्राधिदेवतायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ॥ इति मंत्रन्यासः ॥

## ॥ अथ देवतान्यासः ॥

तत्र–दक्षपादे ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः अं आं सहस्रकोटिऋषिकुलसेवितायै निवृत्त्याचारदेव्यै नमः ॥

वामपादे ६ इं ईं सहस्रकोटियोगिनीकुलसेवितायै प्रतिष्ठाम्बादेव्यै नमः ॥
दक्षगुल्फे ६ उं ऊं सहस्रकोटितपस्विकुलसेवितायै विद्याम्बादेव्यै नमः ॥
वामगुल्फे ६ ऋं ॠं सहस्रकोटिशान्तकुलसेवितायै शान्ताम्बादेव्यै नमः ॥
दक्षजंघायां ६ ऌं ॡं सहस्रकोटिमुनिकुलसेवितायै शान्त्यतीताम्बादेव्यै नमः ॥
वामजंघायां ६ एं ऐं सहस्रकोटिदैवतकुलसेवितायै हृल्लेखाम्बादेव्यै नमः ॥
दक्षजानुनि ६ ओं औं सहस्रकोटिराक्षसकुलसेवितायै गगनाम्बादेव्यै नमः ॥
वामजानुनि ६ अं अः सहस्रकोटिविद्याधरकुलसेवितायै रक्ताम्बादेव्यै नमः ॥
दक्षोरौ ६ कं खं सहस्रकोटिसिद्धकुलसेवितायै महोच्छुष्माम्बादेव्यै नमः ॥
वामोरौ ६ गं घं सहस्रकोटिसाध्यकुलसेवितायै करालिकाम्बादेव्यै नमः ॥
दक्षोरुमूले ६ ङं चं सहस्रकोटिअप्सरःकुलसेवितायै जयाम्बादेव्यै नमः ॥
वामोरुमूले ६ छं जं सहस्रकोटिगंधर्वकुलसेवितायै विजयाम्बादेव्यै नमः ॥
दक्षपार्श्वे ६ झं ञं सहस्रकोटिगुह्यककुलसेवितायै अजिताम्बादेव्यै नमः ॥
वामपार्श्वे ६ टं ठं सहस्रकोटियक्षकुलसेवितायै अपराजिताम्बादेव्यै नमः ॥
दक्षस्तने ६ डं ढं सहस्रकोटिकिन्नरकुलसेवितायै वामाम्बादेव्यै नमः ॥
वामस्तने ६ णं तं सहस्रकोटिपन्नगकुलसेवितायै ज्येष्ठाम्बादेव्यै नमः ॥
दक्षदोर्मूले ६ थं दं सहस्रकोटिपितृकुलसेवितायै रौद्र्यम्बादेव्यै नमः ॥
वामदोर्मूले ६ धं नं सहस्रकोटिगणेश्वरकुलसेवितायै मायाम्बादेव्यै नमः ॥
दक्षभुजे ६ पं फं सहस्रकोटिभैरवकुलसेवितायै कुंडलिन्यम्बादेव्यै नमः ॥
वामभुजे ६ बं भं सहस्रकोटिबटुककुलसेवितायै काल्यम्बादेव्यै नमः ॥
दक्षांसे ६ मं यं सहस्रकोटिक्षेत्रेशकुलसेवितायै कालरात्र्यम्बादेव्यै नमः ॥
वामांसे ६ रं लं सहस्रकोटिप्रमथकुलसेवितायै भगवत्यम्बादेव्यै नमः ॥
दक्षकर्णे ६ वं शं सहस्रकोटिब्रह्मकुलसेवितायै सर्वैश्वर्यम्बादेव्यै नमः ॥
वामकर्णे ६ षं सं सहस्रकोटिविष्णुकुलसेवितायै सर्वज्ञात्र्यम्बादेव्यै नमः ॥
भाले ६ हं ळं सहस्रकोटिरुद्रकुलसेवितायै सर्वकर्त्र्यम्बादेव्यै नमः ॥
ब्रह्मरंध्रे ६ क्षं सहस्रकोटिचराचरकुलसेवितायै कुलशक्त्यम्बादेव्यै नमः ॥

ततः ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः सकलमातृकामुच्चार्य समस्तदेवताधिपायै श्रीपराम्बादेव्यै नमः ह्सौः ह्सौः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ॥ इति दैवतन्यासः

॥ अथ मातृकान्यासः ॥

तत्र—मूलाधारे ओं ऐं ह्रीं श्रीं ह्सौः ह्सौः कं खं गं घं ङं अनन्तकोटिभूचरीकुलसहितायै आं क्षां मंगलाम्बादेव्यै आं क्षां ब्रह्माण्यम्बादेव्यै अनन्तकोटिभूचराकुलसहिताय अं क्षं मंगलनाथाय अं क्षं असितांगभैरवनाथाय नमः ॥

स्वाधिष्ठाने ६ चं छं जं झं ञं अनन्तकोटिखेचरीकुलसहितायै ईं ळां चर्चिकाम्बादेव्यै ईं ळां माहेश्वर्यम्बादेव्यै अनन्तकोटिवेतालकुलसहिताय इं ळं चर्चिकनाथाय इं ळं रु रु भैरवनाथाय नमः ॥

मणिपूरके ६ टं ठं डं ढं णं अनन्तकोटिपातालचरीकुलसहितायै ऊं हां योगेश्वर्यम्बादेव्यै ऊं हां कौमार्यम्बादेव्यै अनन्तकोटिपिशाचकुलसहिताय उं हं योगेश्वरनाथाय उं हं चंडभैरवनाथाय नमः ॥

अनाहते ६ तं थं दं धं नं अनन्तकोटिदिक्चरीकुलसहितायै ॠं सां हरसिद्धाम्बादेव्यै ॠं सां वैष्णव्यम्बादेव्यै अनन्तकोटचपस्मारकुलसहिताय ऋं सं हरसिद्धनाथाय ऋं सं क्रोध-भैरवनाथाय नमः ॥

विशुद्धौ ६ पं फं बं भं मं अनन्तकोटिसहचरीकुलसहितायै ॡं षां भट्टिन्यम्बादेव्यै ॡं षां वाराह्यम्बादेव्यै अनन्तकोटिब्रह्मराक्षसकुलसहिताय ऌं षं भट्टिनाथाय ऌं षं उन्मत्तभैरवनाथाय नमः ॥

आज्ञाया ६ यं रं लं वं अनन्तकोटिगिरिचरीकुलसहितायै ऐं शां किलिकिलाम्बादेव्यै ऐं शां इन्द्राण्यम्बादेव्यै अनन्तकोटिचेटककुलसाहिताय एं शं किलिकिलनाथाय एं शं कपालिभैरवनाथाय नमः ॥

भाले ६ शं षं सं हं अनन्तकोटिवनचरीकुलसहितायै औं वां कालराज्यम्बादेव्यै औं वां चामुण्डाम्बादेव्यै अनन्तकोटिप्रेतकुलसहिताय ओं वं कालरात्रिनाथाय ओं वं भीषणभैरवनाथाय नमः ॥

ब्रह्मरंध्रे ६ ळं क्षं अनन्तकोटिजलचरीकुलसहितायै अः लां भीषणाम्बादेव्यै अः लां महालक्ष्म्यम्बादेव्यै अनन्तकोटिकूष्मांडकुलसहिताय अं लं भीषणनाथाय अं लं संहारभैरवनाथाय नमः ॥

ततः ओं ऐं ह्रीं श्रीं ह्सौं ह्सौः समस्तमातृकामुच्चार्य समस्तमातृकाभैरवाधिदेवतायै श्रीपराम्बा-देव्यै नमः ह्सौः ह्सौः श्रीं ह्रीं ऐं ओं इति व्यापकं कुर्यात् ॥ इति मातृभैरवन्यासः ॥ इति महाषोढान्यासः ॥

ततः पूर्वोक्तैः ह्सां ह्सीं इत्यादिभिः करषडंगन्यासं विधाय देवं ध्यायेत् ॥ यथा ॥—

अमृतार्णवमध्योद्यत् स्वर्णद्वीपे मनोरमे ।
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमंडपे ॥ १ ॥
नवरत्नमयश्रीमत् सिंहासनगताम्बुजे ।
त्रिकोणान्तःसमासीनं चंद्रसूर्यायुतप्रभम् ॥ २ ॥

अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।
कोटिकंदर्पलावण्यं सदा षोडशवार्षिकम् ॥ ३ ॥

मंदस्मितमुखांभोजं त्रिनेत्रं चंद्रशेखरम् ।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ॥ ४ ॥

पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः
विद्यासंसदि बिभ्राणं सदानंदमुखेक्षणम् ॥ ५ ॥

महाषोढोदिताशेषदेवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ॥ ६ ॥

पुरुषं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ध्यायेत् सच्चिदानंदलक्षणम् ॥ ७ ॥

सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम् ॥

इति स्वाभेदेन ध्यात्वा योनिलिंगसुरभिकपालज्ञानत्रिशूलपुस्तकवनमालानभोमहामुद्रा इति दश मुद्रा विरच्य शिरसि श्रीगुरुं ध्यायेत् । यथा ।

सहस्रदलपंकजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगंधपुष्पांबरम् ।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुं ॥

इति श्रीगुरुं ध्यात्वा । तद्विद्यया तत्पादुकां शिरसि विन्यस्य प्रणम्य स्वगुरुकृतं स्वनाम स्वमूलाधारे स्मृत्वा शिवरूपं स्वात्मानं ध्यायेत् ॥

## ॥ अथ महाषोढान्यासफलं कुलार्णवे ॥

एवं न्यासे कृते देवि साक्षात् परशिवो भवेत् ।
मंत्री न चात्र संदेहो निग्रहानुग्रहक्षमः ॥
महाषोढाह्वयं न्यासं यः करोति दिने दिने ।
देवाः सर्वे नमस्यन्ति तं नमामि न संशयः ॥
महाषोढाह्वयं न्यासं यत्र मंत्री न्यसेत्ततः ।
दिव्यक्षेत्रं समुद्दिष्टं समन्ताद्दशयोजनम् ॥
कृत्वा न्यासमिमं देवि यत्र गच्छति मानवः ।
तत्र श्रीर्विजयो लाभः स मान्यः पुरुषः प्रिये ॥

महाषोढाकृतन्यासः त्वदीक्षायाभिवंदिते ।
समासान्मृत्युमाप्नोति यदि त्राता शिवः स्वयं ॥
वज्रपंजरनामानमेवं न्यासं करोति यः ।
दिव्यान्तरिक्षभूशैलजलारण्यनिवासिनः ॥
उद्दंडभूतवेतालदेवरक्षोग्रहादयः ।
भयग्रस्तेन मनसा नेक्षन्ते साधकं प्रिये ॥
महाषोढाह्वयं न्यासं ब्रह्मविष्णुशिवादयः ।
देवाः सर्वे प्रकुर्वन्ति ऋषयश्च मुनीश्वराः ॥
बहुनोक्तेन किं देवि सुशिष्याय प्रकाशयेत् ।
अक्षयां लभते सिद्धिं रहसि न्यासमाचरेत् ॥
अस्मात् परतरः साक्षाद्देवताभावसिद्धिदः ।
लोके नास्ति न संदेहः सत्यं सत्यं न संशयः ॥
ऊर्ध्वाम्नायप्रवेशश्च पराप्रासादचिंतनम् ।
महाषोढापरिज्ञानं नाल्पस्य तपसः फलम् ॥

इत्थं महाषोढान्यासं विधाय ॥

## त्रिविधः श्रीचक्रन्यासः ( पत्र ११७, पंक्ति १२ )

अथ श्रीचक्रन्यासः॥ श्रीं गुं गुरुभ्यो नमः। श्रीं गं गणपतये नमः। प्राणानायम्य मूलेन ऋष्यादिन्यासमाचरेत् ॥ ध्यात्वा संपूज्य देहं स्वं ध्यायेच्छ्रीचक्ररूपकम् ॥ १ ॥ शरीरं चिन्तयेदादौ निजं श्रीचक्ररूपिणं ॥ त्वगाद्याकारनिर्मुक्तं ज्वलत्कालाग्निसंनिभम् ॥ २ ॥ पृथ्वीपुरत्रितयभूमिपपत्रनागपत्रेंद्रकोणदशकोणयुगेभकोणम् ॥ अंतस्त्रिकोणमथ बिन्दुपदं समीड्यं श्रीचक्रराजमतुलं विमृशेत्स्वदेहं ॥ ३ ॥ एवं प्राणानायम्य श्रीमूलविद्यया एव ऋष्यादिकरषडंगन्यासान् कृत्वा देवीं ध्यात्वा संपूज्य च स्वदेहं श्रीचक्ररूपिणं ध्यात्वा न्यसेत् ॥ तद्यथा ॥ ओं ऐं ह्रीं श्रीं लं इंद्राय नमः इति दक्षपादांगुष्ठे ॥ ओं ऐं ह्रीं श्रीं रं अग्नये नमः इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं टं यमाय नमः इति दक्षपार्श्वे ॥ ओं ऐं ह्रीं श्रीं क्षं नैर्ऋतये नमः इति दक्षांसे ॥ ओं ऐं ह्रीं श्रीं वं वरुणाय नमः इति वामांसे ॥ ओं ऐं ह्रीं श्रीं यं वायवे नमः इति वामपार्श्वे ॥ ओं ऐं ह्रीं श्रीं सं सोमाय नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं हं ईशानाय नमः इति वामपादांगुष्ठे ॥ ओं ऐं ह्रीं श्रीं आं ब्रह्मणे नमः इति ब्रह्मरंध्रे ॥ ओं ऐं ह्रीं श्रीं ह्रीं अनंताय नमः इति मूलाधारे ॥ इति **दिग्बंधनम्** ॥ ओं ऐं ह्रीं श्रीं गं गणेशाय नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं क्षं क्षेत्रपालाय नमः इति वामांसे ॥ ओं ऐं ह्रीं श्रीं बं बटुकाय नमः इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं यां योगिनीभ्यो नमः इति दक्षांसे ॥ इति **बलिदेवतान्यासः** ॥ अथ **दशपीठशक्तिन्यासः** ॥ ओं ऐं ह्रीं श्रीं मोहिन्यै नमः इति पादांगुष्ठद्वये ॥ ओं ऐं ह्रीं श्रीं क्षोभिण्यै नमः

इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं वशिन्यै नमः इति दक्षकूर्परे ॥ ओं ऐं ह्रीं श्रीं स्तंभिन्यै नमः इति दक्षकरांगुल्यग्रे ॥ ओं ऐं ह्रीं श्रीं आकर्षिण्यै नमः इति विशाखायाम् ॥ ओं ऐं ह्रीं श्रीं द्राविण्यै नमः इति वामकरांगुल्यग्रे ॥ ओं ऐं ह्रीं श्रीं आल्हादिन्यै नमः इति वामकूर्परे ॥ ओं ऐं ह्रीं श्रीं क्लिन्नायै नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं क्लेदिन्यै नमः इति हृदि ॥ ओं ऐं ह्रीं श्रीं क्लीं सर्वतत्त्वकमलासनाय नमः इति सर्वांगे ॥ इति **दशपीठशक्तिन्यासः** ॥ ओं ऐं ह्रीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्राय नमः इति सर्वांगे व्यापकत्वेन विन्यस्य ॥ ओं ऐं ह्रीं श्रीं बाह्यचतुरस्ररेखायै नमः इति आचूडचरणं वक्ष्यमाणेष्ववयवेषु व्यापकं न्यस्य ॥ ओं ऐं ह्रीं श्रीं अणिमासिद्ध्यै नमः इति दक्षांसपश्चाद्भागे ॥ ओं ऐं ह्रीं श्रीं लघिमासिद्ध्यै नमः इति दक्षपाण्यंगुलिअग्रेषु ॥ ओं ऐं ह्रीं श्रीं महिमासिद्ध्यै नमः इति दक्षोरुसंधौ ॥ ओं ऐं ह्रीं श्रीं ईशित्वसिद्ध्यै नमः इति दक्षपादांगुल्यग्रेषु ॥ ओं ऐं ह्रीं श्रीं वशित्वसिद्ध्यै नमः इति वामपादांगुल्यग्रेषु ॥ ओं ऐं ह्रीं श्रीं प्राकाम्यसिद्ध्यै नमः इति वामोरुसंधौ ॥ ओं ऐं ह्रीं श्रीं भुक्तिसिद्ध्यै नमः इति वामपाण्यंगुल्यग्रेषु ॥ ओं ऐं ह्रीं श्रीं इच्छासिद्ध्यै नमः इति वामांसपृष्ठे ॥ ओं ऐं ह्रीं श्रीं प्राप्तिसिद्ध्यै नमः इति शिखामूले ॥ ओं ऐं ह्रीं श्रीं सर्वकामसिद्ध्यै नमः इति शिरःपृष्ठे ॥ तदंतश्चतुरस्र**मध्यरेखायै** नमः इति वक्ष्यमाणेष्वंगेषु व्यापकं न्यस्य ॥ ओं ऐं ह्रीं श्रीं ब्राह्म्यै नमः इति पादांगुष्ठद्वये ॥ ओं ऐं ह्रीं श्रीं माहेश्वर्यै नमः इति दक्षपार्श्वे ॥ ओं ऐं ह्रीं श्रीं कौमार्यै नमः इति शिरसि ॥ ओं ऐं ह्रीं श्रीं वैष्णव्यै नमः इति वामपार्श्वे ॥ ओं ऐं ह्रीं श्रीं वाराह्यै नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं इंद्राण्यै नमः इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं चामुंडायै नमः इति दक्षांसे ॥ ओं ऐं ह्रीं श्रीं महालक्ष्म्यै नमः इति वामांसे ॥ तदंत**श्चतुरस्रांत्यरेखायै** नमः इति व्यापकं न्यस्य ॥ ओं ऐं ह्रीं श्रीं द्रां सर्वसंक्षोभिण्यै मुद्रायै नमः इति पादांगुष्ठद्वये ॥ ओं ऐं ह्रीं श्रीं द्रीं सर्वविद्राविण्यै नमः इति दक्षपार्श्वे ॥ ओं ऐं ह्रीं श्रीं क्लीं सर्वाकर्षिण्यै नमः इति शिरसि ॥ ओं ऐं ह्रीं श्रीं ब्लूं सर्ववशंकर्यै नमः इति वामपार्श्वे ॥ ओं ऐं ह्रीं श्रीं सः सर्वोन्मादिन्यै नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं क्रों सर्वमहांकुशायै नमः इति दक्षजानुनि ॥ ओं ह्रीं श्रीं ह्स्ख्फ्रें सर्वखेचर्यै नमः इति दक्षांसे ॥ ओं ऐं ह्रीं श्रीं ह्सौं सर्वबीजायै नमः इति वामांसे ॥ ओं ऐं ह्रीं श्रीं ऐं सर्वयोनये नमः इति द्वादशांते ॥ ओं ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्लीं ह्स्रौः सर्वत्रिखंडायै नमः इति पादांगुष्ठद्वये ॥ ओं ऐं ह्रीं श्रीं अं आं सौः त्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नमः इति हृदये ॥ तस्या दक्षिणे ओं ऐं ह्रीं श्रीं अणिमासिद्ध्यै नमः ॥ ओं ऐं ह्रीं श्रीं द्रां सर्वसंक्षोभिण्यै मुद्रायै नमः इति तस्या वामे ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं एताः प्रकटयोगिन्यस्त्रैलोक्यमोहनचक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तु नमः इति व्यापकं विन्यसेत् ॥ इति **प्रथमावरणन्यासः** ॥ ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय ( षोडशदलकमलाय ) नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं अं कामाकर्षिणीनित्याकलायै नमः इति दक्षिणकर्णपृष्ठे ॥ ओं ऐं ह्रीं श्रीं आं बुद्ध्याकर्षिणीनित्याकलायै नमः इति दक्षांसे ॥ ओं ऐं ह्रीं श्रीं इं अहंकाराकर्षिणीनित्याकलायै नमः इति दक्षकूर्परे ॥ ओं ऐं ह्रीं श्रीं ईं शब्दाकर्षिण्यै नित्याकलायै नमः इति दक्षकरपृष्ठे ॥ ओं ऐं ह्रीं श्रीं उं स्पर्शाकर्षिण्यै नित्याकलायै

नमः इति दक्षिणोरौ ॥ ओं ऐं ह्रीं श्रीं ऊं रूपाकर्षिण्यै नित्याकलायै नमः इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं ॠं रसाकर्षिण्यै नित्याकलायै नमः इति दक्षगुल्फे ॥ ओं ऐं ह्रीं श्रीं ॠं गंधाकर्षिण्यै नित्याकलायै नमः इति दक्षपादतले ॥ ओं ऐं ह्रीं श्रीं लृं चित्ताकर्षिण्यै नित्याकलायै नमः इति वामपादतले ॥ ओं ऐं ह्रीं श्रीं ॡं धैर्याकर्षिण्यै नित्याकलायै नमः इति वामगुल्फे ॥ ओं ऐं ह्रीं श्रीं एं स्मृत्याकर्षिण्यै नित्याकलायै नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं ऐं नामाकर्षिण्यै नित्याकलायै नमः इति वामोरौ ॥ ओं ऐं ह्रीं श्रीं ओं बीजाकर्षिण्यै नित्याकलायै नमः इति वामकरपृष्ठे ॥ ओं ऐं ह्रीं श्रीं औं आत्माकर्षिण्यै नित्याकलायै नमः इति वामकूर्परे ॥ ओं ऐं ह्रीं श्रीं अं अमृताकर्षिण्यै नित्याकलायै नमः इति वामांसे ॥ ओं ऐं ह्रीं श्रीं अः शरीराकर्षिण्यै नित्याकलायै नमः इति वामश्रोत्रपृष्ठे ॥ ओं ऐं ह्रीं श्रीं ऐं क्लीं सौः सर्वाशापरिपूरकचक्रेश्वर्यै त्रिपुरेश्यै नमः इति हृदये ॥ तस्या दक्षिणे ओं ऐं ह्रीं श्रीं लघिमासिद्ध्यै नमः ॥ वामे ओं ऐं ह्रीं श्रीं द्रीं सर्वविद्राविद्राविणीमुद्रायै नमः ॥ इति विन्यस्य ॥ एताः गुप्तयोगिन्यः सर्वाशापरिपूरकचक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः संपूजिताः सन्तु नमः इति व्यापकं न्यसेत् ॥ इति **द्वितीयावरणन्यासः** ॥ ततः ओं ऐं ह्रीं श्रीं ह्रीं क्लीं सौः **अष्टदलपद्माय सर्वसंक्षोभणचक्राय** नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं कं खं गं घं ङं अनंगकुसुमायै नमः इति दक्षशंखे ॥ ओं ऐं ह्रीं श्रीं चं छं जं झं ञं अनंगमेखलायै नमः इति दक्षजत्रुणि (बाहुमूलसंधौ) ॥ ओं ऐं ह्रीं श्रीं टं ठं डं ढं णं अनंगमदनायै नमः इति दक्षोरौ ॥ ओं ऐं ह्रीं श्रीं तं थं दं धं नं अनंगमदनातुरायै नमः इति दक्षगुल्फे ॥ ओं ऐं ह्रीं श्रीं पं फं बं भं मं अनंगरेखायै नमः इति वामगुल्फे ॥ ओं ऐं ह्रीं श्रीं यं रं लं वं अनंगवेगिन्यै नमः इति वामोरौ ॥ ओं ऐं ह्रीं श्रीं शं षं सं हं अनंगांकुशायै नमः इति वामजत्रुणि ॥ ओं ऐं ह्रीं श्रीं ळं क्षं अनंगमालिन्यै नमः इति वामशंखे ॥ ओं ऐं ह्रीं श्रीं ह्रीं क्लीं सौः सर्वसंक्षोभणचक्रेश्वर्यै त्रिपुरसुंदर्यै नमः इति हृदये ॥ तस्या दक्षिणे ओं ऐं ह्रीं श्रीं महिमासिद्ध्यै नमः ॥ वामे ओं ऐं ह्रीं श्रीं क्लीं आकर्षिणीमुद्रायै नमः ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं एताः गुप्ततरयोगिन्यः **सर्वसंक्षोभणे चक्रे** समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः संतु नमः इति व्यापकं कुर्यात् ॥ इति **तृतीयावरणन्यासः** ॥ ततः ओं ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः **चतुर्दशारचक्राय सर्वसौभाग्यदायक**चक्राय नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं कं सर्वसंक्षोभिणीशक्त्यै नमः इति ललाटदक्षभागे ॥ ओं ऐं ह्रीं श्रीं खं सर्वविद्राविणीशक्त्यै नमः इति दक्षगंडे ॥ ओं ऐं ह्रीं श्रीं गं सर्वाकर्षिणीशक्त्यै नमः इति दक्षांसे ॥ ओं ऐं ह्रीं श्रीं घं सर्वाल्हादिनीशक्त्यै नमः इति दक्षपार्श्वे ॥ ओं ऐं ह्रीं श्रीं ङं सर्वसंमोहिनीशक्त्यै नमः इति दक्षोरौ ॥ ओं ऐं ह्रीं श्रीं चं सर्वस्तंभिनीशक्त्यै नमः इति दक्षजंघायां ॥ ओं ऐं ह्रीं श्रीं छं सर्वजृंभिणीशक्त्यै नमः इति वामजंघायां ॥ ओं ऐं ह्रीं श्रीं जं सर्ववशंकरिणीशक्त्यै नमः इति वामोरौ ॥ ओं ऐं ह्रीं श्रीं झं सर्वरंजिनीशक्त्यै नमः इति वामपार्श्वे ॥ ओं ऐं ह्रीं श्रीं ञं सर्वोन्मादनकरिणीशक्त्यै नमः इति वामांसे ॥ ओं ऐं ह्रीं श्रीं टं सर्वार्थसाधिनी-शक्त्यै नमः इति वामगंडे ॥ ओं ऐं ह्रीं श्रीं ठं संपत्तिपूरिणीशक्त्यै नमः इति ललाटवामभागे ॥

ओं ऐं ह्रीं श्रीं डं सर्वमंत्रमयीशक्त्यै नमः इति ललाटे ॥ ओं ऐं ह्रीं श्रीं ढं सर्वद्वंद्वक्षयंकरीशक्त्यै नमः इति चूडाधः शिरःपृष्ठे वा ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं हैं ह्क्लीं ह्सौः त्रिपुरवासिनी**सर्वसौभाग्यदायक**चक्रेश्वर्यै नमः इति हृदये ॥ तस्या दक्षिणे ओं ऐं ह्रीं श्रीं ईशित्वसिद्ध्यै नमः ॥ तस्या वामे ओं ऐं ह्रीं श्रीं ब्लूं सर्ववशंकरीमुद्रायै नमः इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं एताः संप्रदाययोगिन्यः **सर्वसौभाग्यदायके** चक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः संतु नम इति व्यापकं कुर्यात् ॥ इति **चतुर्थावरणन्यासः** ॥ ततः ओं ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्सौः **बहिर्दशारचक्राय सर्वार्थसाधकचक्राय** नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं णं सर्वसिद्धिप्रदादेव्यै नमः इति दक्षनेत्रे ॥ ओं ऐं ह्रीं श्रीं तं सर्वसंपत्प्रदादेव्यै नमः इति नासामूले ॥ ओं ऐं ह्रीं श्रीं थं सर्वप्रियंकरीदेव्यै नमः इति वामनेत्रे ॥ ओं ऐं ह्रीं श्रीं दं सर्वमंगलकारिणीदेव्यै नमः इति वामबाहुमूले ॥ ओं ऐं ह्रीं श्रीं धं सर्वकामप्रदादेव्यै नमः इति वामोरुमूले ॥ ओं ऐं ह्रीं श्रीं नं सर्वदुःखविमोचिनीदेव्यै नमः इति वामजानुनि ॥ ओं ऐं ह्रीं श्रीं पं सर्वमृत्युप्रशमनीदेव्यै नमः इति दक्षजानुनि ॥ ओं ऐं ह्रीं श्रीं फं सर्वविघ्नविनाशिदेव्यै नमः इति गुदे ॥ ओं ऐं ह्रीं श्रीं बं सर्वांगसुंदरीदेव्यै नमः इति दक्षोरुमूले ॥ ओं ऐं ह्रीं श्रीं भं सर्वसौभाग्यदायिनीदेव्यै नमः इति दक्षबाहुमूले ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं ह्सैं ह्स्क्लीं ह्सौः त्रिपुराश्रियै **सर्वार्थसाधकचक्रेश्वर्यै** नमः इति हृदये ॥ तस्या दक्षिणे वशित्वसिद्ध्यै नमः ॥ वामे सः सर्वोन्मादिनीमुद्रायै नमः ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं एताः कुलकौलयोगिन्यः **सर्वार्थसाधकचक्रे** समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः संतु नमः इति व्यापकं कुर्यात् ॥ इति **पंचमावरणन्यासः** ॥ ततः ओं ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें अंतर्दशारचक्राय **सर्वरक्षाकरचक्राय** नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं मं सर्वज्ञादेव्यै नमः इति दक्षनासापुटे ॥ ओं ऐं ह्रीं श्रीं यं सर्वशक्तिदेव्यै नमः इति दक्षसृक्किणि ॥ ओं ऐं ह्रीं श्रीं रं सर्वैश्वर्यप्रदायिनीदेव्यै नमः इति दक्षस्तने ॥ ओं ऐं ह्रीं श्रीं लं सर्वज्ञानमयीदेव्यै नमः इति दक्षमुष्के ॥ ओं ऐं ह्रीं श्रीं वं सर्वव्याधिविनाशिनीदेव्यै नमः इति सीवन्यां ॥ ओं ऐं ह्रीं श्रीं शं सर्वाधारस्वरूपादेव्यै नमः इति वाममुष्के ॥ ओं ऐं ह्रीं श्रीं षं सर्वपापहरादेव्यै नमः इति वामस्तने ॥ ओं ऐं ह्रीं श्रीं सं सर्वानंदमयीदेव्यै नमः इति वामसृक्किणि ॥ ओं ऐं ह्रीं श्रीं हं सर्वरक्षास्वरूपिणीदेव्यै नमः इति वामनासापुटे ॥ ओं ऐं ह्रीं श्रीं क्षं सर्वेप्सितफलप्रदायै देव्यै नमः इति नासाग्रे ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं ह्रीं क्लीं ब्लें त्रिपुरमालिनी **सर्वरक्षाकरचक्रे**श्वर्यै नमः इति हृदये ॥ तस्या दक्षिणे ओं ऐं ह्रीं श्रीं प्राकाम्यसिद्ध्यै नमः ॥ वामे ओं ऐं ह्रीं श्रीं क्रों महांकुशामुद्रायै नमः ॥ इति विन्यस्य ॥ ओं ऐं ह्रीं श्रीं एताः निगर्भयोगिन्यः सर्वरक्षाकरचक्रे समुद्राः ससिद्धयः सायुधाः सवाहनाः सपरिवाराः सर्वोपचारैः संपूजिताः सन्तु नमः इति व्यापकं कुर्यात् ॥ इति **षष्ठावरणन्यासः** ॥ ततः ओं ऐं ह्रीं श्रीं ह्रीं श्रीं सौः अष्टकोणचक्राय **सर्वरोगहरचक्राय** नमः इति व्यापकं विन्यस्य ॥ ओं ऐं ह्रीं श्रीं अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः र्व्लूं वशिनीवाग्देवतायै नमः

